पुस्तकमिदं राष्ट्रियसंस्कृतसंस्थानस्य पुनर्मुद्रणयोजनायां प्रकाशितम्।

मुनिश्रीलावण्यविजयसूरिविनिर्मित

# धातुरत्नाकर

# DHĀTURATNĀKARA

OF

MUNI LĀVAṆYA VIJAYA SŪRI

प्रथम भाग

तिङन्त प्रक्रिया

पुनरीक्षित संस्करण



राष्ट्रिय-संस्कृत-संस्थान

मानित विश्वविद्यालय

५६-५७, इन्स्टीट्यूशनल एरिया,

जनकपुरी, नई दिल्ली - ११००५८

The firm will replace the copy/copies free of cost if any defect is found

प्रकाशक :

**प्रो. वेम्पटि कुटुम्ब शास्त्री**

कुलपति

**राष्ट्रिय-संस्कृत-संस्थान**

मानित विश्वविद्यालय

(मानवसंसाधन विकास मंत्रालय, भारत सरकार के अधीन)

५६-५७, इन्स्टीट्यूशनल एरिया,

जनक पुरी, नई दिल्ली - ११००५८

योजनासमन्वायक

**प्रो० आर. देवनाथन्**

प्राचार्य, (दिल्ली परिसर)

**डॉ० प्रकाशपाण्डेय**

सहायक निदेशक (शोध एवं प्रकाशन)

**द्वितीयं पुनर्मुद्रितसंस्करणम् : २००६**

**मूल्यम् : रूप्यकाणि १६६५.०० (१-५ भाग)**

मुद्रक:



**परिमल पब्लिकेशन्स**

27/28, शक्तिनगर

दिल्ली - 110007 (भारत)

अर्जुन सिंह
**ARJUN SINGH**




मानव संसाधन विकास मंत्री
भारत
नई दिल्ली ११० ००१
MINISTRY OF
HUMAN RESOURECE DEVELOPMENT INDIA
NEW DELHI- 110001

# सन्देश

संस्कृत साहित्य में अनेक ग्रन्थरत्न विद्यमान हैं जिनका पठन-पाठन एवं अनुसन्धान इस राष्ट्र में सहस्रों वर्षों से चला आ रहा है। वेद, शास्त्र, स्मृति एवं पुराण जैसे विशाल ग्रन्थ संस्कृत वाङ्मय का अंग हैं। यह वाङ्मय समय-समय पर प्रतिष्ठित विद्वानों द्वारा परिश्रम एवं आर्थिक व्यय से अंशतः प्रकाशित भी हुआ है। किन्तु समय के साथ इन ग्रन्थों की मुद्रित पुस्तकें छात्रों, विद्वानों एवं सामान्यजनों को दुर्लभ होने लगी हैं। अतः इन दुर्लभ सुसम्पादित ग्रन्थों का पुनर्मुद्रण कर न्यूनतम मूल्य पर उपलब्ध कराने की योजना मानव संसाधन विकास मंत्रालय एवं उसके अंगभूत राष्ट्रिय-संस्कृत-संस्थान के द्वारा कार्यान्वित की गयी है।

मैं आशा करता हूँ कि इस दूरगामी उपक्रम से संस्कृत के विद्वान्, छात्र एवं संस्कृतप्रेमी सामन्यजन लाभान्वित होंगे तथा संस्कृत के ज्ञान, वैभव का विस्तार होगा। साथ ही मैं यह भी कामना करता हूँ कि राष्ट्रिय-संस्कृत-संस्थान इस योजना में अन्य महत्वपूर्ण ग्रन्थों को भी प्रकाशित कर संस्कृत की श्रीवृद्धि करेगा।

(अर्जुन सिंह)

सर्वतन्त्रस्वतन्त्र-शासनसम्राट्-सूरिचक्रचक्रवर्त्ति जगद्गुरुतपागच्छाधिपति-भट्टारक

जन्म सं. १९२९ कार्तिक शु. १ मधुमती ( महुवा ) : दीक्षा सं. १९४५ ज्येष्ठ शु. ७ भावनगर



गणिपद सं. १९६० कार्त्तिक कृष्ण ७ वल्लभीपुर ( वळा ) : पन्यासपद सं. १९६० मागशर शु. ३ वल्लभीपुर ( वळा )

भव्याब्ध्यामदवृद्धिचन्द्रसदृशं, श्रीनेमिसूरीश्वरं ।
सम्यग्दर्शनबोधदानसदनं, चारित्रभानूदयम् ॥
जैनेन्द्रागमतत्त्वनन्दनघनं, लावण्ययोगालयं ॥
भो दक्षास्त्रिविधं हितं प्रणमत, प्रज्ञाप्रमोदक्षमम् ॥ १ ॥

## आचार्य श्रीविजयनेमिसूरीश्वरः

सूरिपद सं. १९६४ ज्येष्ठ शु. ५ भावनगर

तपोगच्छाधिपति–सर्वतन्त्रस्वतन्त्र–शासनसम्राट्–सूरिचक्रचक्रवर्त्ति–जगद्गुरु–भट्टारकाचार्यवर्य–
श्रीमद्विजयनेमिसूरीश्वरपट्टालङ्कार–
व्याकरणवाचस्पति–शास्त्रविशारद–कविरत्न–निरुपमव्याख्यानसुधावर्षि–विबुधशिरोमणि–धातुरत्नाकर-
तिलकमञ्जरीटीकाद्यनेकग्रन्थप्रणेता—

**जन्म**–वि. सं. १९५३ भाद्रपद वद ५ **दीक्षा**–वि. सं. १९७२ अषाड सुद ५ **वडी दीक्षा**–वि. सं. १९७३ मागशर
**प्रवर्त्तकपद**–वि. सं. १९८७ कार्त्तिक (प्रायः) बोटाद (काठीयावाड) ॥ सादडी, (मारवाड) ॥
सुद ३ सादडी, (मारवाड) ॥ वद २, अमदावाद ॥



**गणिपद**–वि. सं. १९९० मागशर **पंन्यासपद**–वि. सं. १९९० मागशर **उपाध्याय पद**–वि. सं. १९९१ जेठ
**आचार्यपद**–वि. सं. १९९२ वैशाख सुद ८, भावनगर ॥ सुद १०, भावनगर ॥
वद १२, महुवा (काठीयावाड) ॥ सुद ४, अमदावाद ॥

**भट्टारकाचार्यश्रीमद्विजयलावण्यसूरीश्वरः ॥**

"न्यायव्याकरणागमेषु ललिते, काव्ये तथा छन्दसि। साहित्यप्रभृतौ प्रबन्धगगने यद्धीकराः विस्तृताः॥
प्रत्युत्पन्नमतिः प्रसादमदनं, व्याख्यानवाचस्पतिः। सोऽयं दक्षप्रमोददो विजयते, लावण्यसूरीश्वरः॥१॥"

# भूमिका

धातुरत्नाकर हैम-व्याकरण की पद्धति में धातुरूपों का एक विपुल संग्रह है। इस संग्रह के कर्त्ता जैनमुनि आचार्य श्रीलावण्यविजयसूरि हैं।

पाणिनि-व्याकरण तथा पाणिनि-उत्तरवर्ती संस्कृत व्याकरण की अनेक परम्पराओं के स्वरूपनिर्माण में जैन-वैयाकरणों का महत्त्वपूर्ण योगदान रहा है। जैन-वैयाकरणों में जैनेन्द्र, शाकटायन तथा हेमचन्द्र ने अपनी विशिष्ट व्याकरणपद्धतियाँ स्थापित की हैं। उक्त व्याकरणपद्धतियों में, और संभवत: समस्त पाणिनि-उत्तरवर्ती व्याकरणपद्धतियों में, हेमचन्द्र द्वारा स्थापित व विकसित हैम-व्याकरण स्वयं में सर्वाधिक समग्र व सर्वाधिक वैज्ञानिक व्याकरण-तन्त्र है।

अपनी स्थापना के अनन्तर छोटी सी कालावधि में ही हैम-व्याकरण का गहन प्रचार और प्रसार हुआ। विद्वत्समाज के बीच इसे शीघ्र ही व्यापक स्वीकृति मिल गयी। हैम-व्याकरण चूँकि संस्कृत के साथ-साथ प्राकृत भाषा का भी व्याकरण प्रस्तुत करता था, इसलिए जैन परम्परा में तो विशेष रूप से इसके अध्ययन-अध्यापन की एक सुदीर्घ परम्परा ही प्रारम्भ हो गयी। जैन-धर्मावलम्बियों के बीच यह अविलम्ब ही बहुत लोकप्रिय हो गया।

प्रो० कीलहॉर्न के अनुसार हेमचन्द्र ने समस्त पूर्ववर्ती व्याकरणपद्धतियों का गम्भीर अध्ययन व विस्तृत मनन किया था और उनकी शैलियों व गुण-दोषों की आलोचनात्मक मीमांसा की थी। इसी अध्ययन-मनन और मीमांसा के फलस्वरूप ही वे अपने व्याकरणतन्त्र को एक परिष्कृत एवं उत्कृष्ट स्वरूप प्रदान कर सके थे।

**हेमचन्द्राचार्य का व्यक्तित्व**

हेमचन्द्र जैन-धर्म की श्वेताम्बर-शाखा के एक अग्रणी आचार्य थे। वे बारहवीं शताब्दी के सुप्रसिद्ध जैन विद्वान् हैं। जैन मतानुयायियों के बीच उनका नाम अत्यन्त श्रद्धा से लिया जाता है। जैन ग्रन्थकारों में उनका मूर्धन्य स्थान है। जैन-परम्परा में वे आचार्य हेमचन्द्रसूरि के नाम से विख्यात हैं। हेमचन्द्रसूरि की विविध शास्त्रों में अव्याहत गति थी। जैनधर्मावलम्बी उन्हें 'सर्वज्ञ' मानते हैं। विविध विद्याओं में पारङ्गत होने के कारण ही इस अप्रतिम मनीषी को अनहिलपाटन के सम्राट् ने 'कलिकालसर्वज्ञ' की उपाधि प्रदान की थी।

मेरुतुङ्गसूरिविरचित 'प्रबन्धचिन्तामणि' तथा प्रभाचन्द्रसूरिकृत 'प्रभावकचरित' नामक ग्रन्थ में आचार्य हेमचन्द्र के जीवन का विस्तृत विवरण दिया गया है। उन्हीं विवरणों को आधार बनाकर जर्मन विद्वान् डॉ० जी. ब्यूलर ने हेमचन्द्र का जीवनवृत्त लिखा था। यह जीवनवृत्त १८८९ में जर्मनी से प्रकाशित हुआ था। मणिलाल पटेल ने इसका अंग्रेजी में अनुवाद किया है। पुस्तक का अंग्रेजी अनुवाद वाला यह संस्करण १९३६ में कलकत्ता से प्रकाशित हुआ था।

हेमचन्द्राचार्य का जन्म सन् १०८८ में हुआ था। पण्डित युधिष्ठिर मीमांसक कार्तिक पूर्णिमा संवत् ११४५ के दिन को उनकी जन्मतिथि मानते हैं। हेमचन्द्र के जन्मकाल के सम्बन्ध में विद्वानों में कोई वैमत्य नहीं है।

हेमचन्द्र का जन्म अहमदाबाद के समीप 'धुन्धुका' नामक स्थान पर हुआ था। यह स्थान अहमदाबाद से ६० मील दक्षिण-पश्चिम कोण में स्थित है। प्राचीन समय में यह एक समृद्ध नगर था। अनेक ग्रन्थों में इस नगर को

'धुन्धक्कनगर' या 'धुन्धकपुर' भी कहा गया है। आचार्य हेमचन्द्र जन्मना वैश्य थे। मोढ़वंश से सम्बन्ध रखने वाले एक वैश्य परिवार में उनका जन्म हुआ था। वस्तुतः उनके वंशजों का निकास मोढेरा गाँव से हुआ था, इसीलिए वे मोढवंशी कहलाने लगे थे। इस वंश से सम्बन्ध रखने वाले वैश्य जन आज भी मोढ बनिये कहे जाते हैं। हेमचन्द्र के जन्म का नाम 'चाङ्गदेव' था। वस्तुतः हेमचन्द्र के परिवार की कुलदेवी का नाम 'चामुण्डा' तथा कुलपक्ष का नाम 'गोनस' था। उनके माता-पिता ने इन दोनों ही नामों के आद्यक्षरों को लेकर अपने इस पुत्र का नाम चांगदेव रखा था। कहा जाता है कि बालक चानदेव के जन्म से पूर्व ही उसकी माता को उसकी विलक्षणता के सम्बन्ध में अद्भुत स्वप्न आया करते थे। हेमचन्द्र के पिता का नाम 'चाचिग' और माता का नाम 'पाहिणी' था। युधिष्ठिर मीमांसक के अनुसार हेमचन्द्र के पिता वैदिक मत के अनुयायी थे, जबकि उनकी माता का झुकाव जैन धर्म की ओर था।

हेमचन्द्र श्वेताम्बर गुरुओं की सूरि उपाधि वाली एक प्रतिष्ठित आचार्य-परम्परा के महानतम सदस्य माने जाते हैं। इस परम्परा के आचार्यों को उनके गुरुओं से 'सूरि' की उपाधि प्राप्त होती थी। हेमचन्द्र के गुरु श्वेताम्बर-सम्प्रदाय की 'वज्र' नामक शाखा के आचार्य थे। उनका नाम चन्द्रदेवसूरि था। उन्हें देवचन्द्रसूरि के नाम से भी जाना जाता है।

कहा जाता है कि बालक चाङ्गदेव, जब वह अभी आठ वर्ष का मात्र था, एक दिन अपनी माता के साथ मन्दिर की ओर जा रहा था। मार्ग के बीच में ही आचार्य चन्द्रदेवसूरि से उसका साक्षात्कार हो गया। चन्द्रदेवसूरि ने चाङ्गदेव को तीव्र मेधा व विलक्षण सम्भावनाओं से युक्त बालक पाया। उन्हें इस बालक में भवितव्यता के शुभलक्षण स्पष्टरूप से दिखाई पड़े। इन अलौकिक शुभलक्षणों को देखकर देवचन्द्र ने घोषणा की कि यह बालक यदि क्षत्रियकुलोत्पन्न है, तो अवश्यमेव चक्रवर्ती सम्राट् बनेगा, यदि यह ब्राह्मण कुलोत्पन्न है तो महात्मा बनेगा; और यदि इसने दीक्षा ग्रहण कर ली तो अवश्यमेव इस युग में कृतयुग की स्थापना करेगा। स्वाभाविक था कि हेमचन्द्र उस बालक से बहुत प्रभावित हुए। चाङ्गदेव के पिता उस समय परदेश की यात्रा पर थे। आचार्य ने उसकी माता से आग्रह किया कि वे उस बालक को अपने साथ ले जाने की अनुमति प्रदान करें। आचार्य के इस आग्रह पर माता ने अपने उस होनहार पुत्र को सहर्ष उन्हें समर्पित कर दिया। गुरु चन्द्रदेवसूरि का शिष्यत्व ग्रहण करने के पश्चात् उस बालक ने उनके सान्निध्य में रहकर अनेक वर्षों तक विविध शास्त्रों का अध्ययन और मनन किया। अपनी विलक्षण प्रतिभा और कठिन परिश्रम के बल पर उस बालक ने बारह वर्ष के अन्तर्गत ही अनेक विद्याओं में अपार वैदुष्य अर्जित कर लिया। उसने शीघ्र ही एक प्रमुख जैन आचार्य के रूप में विशेष ख्याति अर्जित कर ली; और दुनिया उसे आचार्य हेमचन्द्र व हेमचन्द्रसूरि के नाम से जानने, पहचानने व आदर देने लगी।

हेमचन्द्र को बाल्यावस्था में ही संन्यास की दीक्षा प्रदान कर दी गई थी। आचार्य देवचन्द्र ने चतुर्विध संघ के समक्ष स्तम्भतीर्थ के चैत्यालय में उन्हें संन्यास की दीक्षा दी थी। संन्यासदीक्षा के उपरान्त उनका नाम चाङ्गदेव से बदल कर सोमचन्द्र रख दिया गया। मेरुतुङ्गाचार्य के अनुसार संवत् ११५४ माघशुक्ल १४ शनिवार के दिन संन्यासग्रहण के समय उनकी आयु मात्र नौ वर्ष की थी। सत्रह वर्ष की आयु में उन्हें 'सूरि' की उपाधि प्रदान की गई थी। इस उपाधि से अलंकृत किये जाने के साथ ही उनका नाम भी परिवर्तित कर दिया गया। अब उनका नाम हेमचन्द्र रखा गया। एक किंवदन्ती के अनुसार एक बार सोमचन्द्र ने शक्तिप्रदर्शन हेतु अपने हाथ को आग में रख दिया था। आग में जलता

हुआ सोमचन्द्र का हाथ सोने का बन गया था। इस घटना के उपरान्त ही वे 'हेमचन्द्र' के नाम से प्रसिद्ध हुए थे। 'हेमचन्द्रसूरि' बनने के पश्चात् उन्होंने अपना समग्र जीवन जैनविद्या के प्रचार-प्रसार के लिए समर्पित कर दिया। वे आजीवन ग्रन्थलेखन करते रहे।

अनाहिलपाटन (गुजरात) का राजा सिद्धराज जयसिंह तथा बाद में उसका पुत्र राजा कुमारपाल हेमचन्द्र के वैदुष्य से आत्यधिक प्रभावित थे। सच तो यह है कि ये दोनों ही राजा हेमचन्द्र के परम भक्त बन गए थे। सिद्धराज जयसिंह ने उन्हें अपने राजदरबार का सदस्य मनोनीत किया था। कुमारपालचरित के अनुसार सिद्धराज ने हेमचन्द्रसूरि के सम्मान में राजविहार तथा सिद्धविहार नामक दो मन्दिरों का निर्माण करवाया था। जयसिंह और कुमारपाल के संरक्षण में ही हेमचन्द्र ने अनेक ग्रन्थों की रचना की। उनके राज्याश्रय में रहते हुए वे जीवनपर्यन्त जैनमत का प्रचार करते रहे। डॉ० ए.के. मजूमदार का मानना है कि हेमचन्द्र की प्रेरणा से ही कुमारपाल ने अपने राज्य में मद्यपान, द्यूतक्रीडा तथा जीवहत्या जैसी बुराईयों को दूर किया था। हेमचन्द्र की मृत्यु सन् ११७२ में हुई थी। मृत्यु के समय उनकी आयु चौरासी वर्ष की थी। ऐतिहासिक साक्ष्य बताते हैं कि उनके स्वर्गस्थ होने के छह मास पश्चात् कुमारपाल की मृत्यु हुई थी। परम्परा के अनुसार उनके शरीर के भस्म को इतने लोगों ने अपने मस्तक पर लगाया कि उनके अन्त्येष्टिस्थल में एक महाखड्ड हो गया। यह महाखड्ड बाद में हेमचन्द्र के नाम से प्रसिद्ध हुआ। आचार्य हेमचन्द्र की समाधि शत्रुञ्जय पर्वत पर स्थित मानी जाती है।

### हेमचन्द्र का कृतित्व

जैसा कि पिछली पङ्क्तियों में कहा गया, हेमचन्द्रसूरि विविध विद्याओं और उनकी विविध विधाओं में पारङ्गत एक मनीषी आचार्य थे। उनका व्यक्तित्व असाधारण था। पाश्चात्य विद्वानों ने उन्हें 'ज्ञान का सागर' कहा है। उनका कृतित्व अभूतपूर्व रहा है। उन्होंने व्याकरण के साथ ही छन्द, न्याय और धर्मशास्त्र जैसे विविध विषयों पर अनेक ग्रन्थों की रचना की है। उनकी प्रत्येक रचना में नया चिन्तन, नयी शैली और नया दृष्टिकोण है। डॉ० मुसलगाँवकर के अनुसार 'संस्कृत साहित्य और विक्रमादित्य के इतिहास में जो स्थान कालिदास का है, श्रीहर्ष के दरबार में जो स्थान बाणभट्ट का है, प्राय: वही स्थान बारहवीं शताब्दी में चालूक्यवंशी गुर्जरनरेश सिद्धराज जयसिंह के इतिहास में हेमचन्द्र का है। उनके द्वारा लिखित अनेक ग्रन्थ आज उपलब्ध नहीं हैं।

आचार्य हेमचन्द्र द्वारा रचित ग्रन्थों की सूची निम्न है—

१. अभिधानचिन्तामणि
२. अभिधानचूडामणि
३. छन्दोऽनुशासन
४. छन्दोऽनुशासनवृत्ति
५. नाममाला
६. नाममालाशेष
७. लिंगानुशासन
८. द्व्याश्रयमहाकाव्य
९. शेषसंग्रह
१०. शेषसंग्रहसारोद्धार
११. सिद्धहैमशब्दानुशासन
१२. विभ्रमसूत्र
१३. बालभाष्यव्याकरणसूत्रवृत्ति
१४. बालाबालसूत्रबृहद्वृत्ति

१५. निघण्टुशेष
१६. धातुपाठ
१७. धातुमाला
१८. धातुपारायण
१९. देशीनाममाला
२०. अनेकार्थकोष
२१. अनेकार्थशेष
२२. काव्यानुशासन
२३. उणादिसूत्रवृत्ति

**हेमचन्द्रप्रणीत सिद्धहैमशब्दानुशासन**

प्रो० कीलहॉर्न ने हैम व्याकरण को मध्यकालीन भारत का सर्वश्रेष्ठ व्याकरण कहा है। हेमचन्द्रसूरि की व्याकरणविषयक प्रमुख रचना 'सिद्धहैमशब्दानुशासन' है। कहा जाता है कि यह ग्रन्थ उन्होंने सिद्धराज जयसिंह के आग्रह पर लिखा था। प्रभावकचरित में इस संबन्ध में एक रोचक प्रसङ्ग मिलता है। उस प्रसङ्ग के अनुसार एक दिन हेमचन्द्र ने राजा सिद्धराज को भोजदेवकृत सरस्वतीकण्ठाभरण नामक व्याकरणग्रन्थ दिखाया। राजा के समक्ष हेमचन्द्र ने उस ग्रन्थ की बहुत प्रशंसा की। यह सुनकर सिद्धराज ने इच्छा व्यक्त की कि हेमचन्द्र स्वयं एक व्याकरणग्रन्थ लिखें। यह ग्रन्थ न केवल सरस्वतीकण्ठाभरण से अपितु अन्य सभी व्याकरणपद्धतियों की तुलना में अधिक उत्कृष्ट, अधिक समग्र व अधिक सरल हो। इस ग्रन्थ में संस्कृत के साथ-साथ प्राकृत भाषा का भी सर्वांग विवेचन हो और इस ग्रन्थ का नाम राजा के नाम पर रखा जाय-

यशो मम तव ख्यातिः पुण्यं च मुनिनायक।
विश्वलोकोपकाराय कुरु व्याकरणं नवम्।।

गुजरात में उन दिनों अध्ययन-अध्यापन में सर्ववर्माविरचित कातन्त्रव्याकरण का प्रचलन था। यह ग्रन्थ स्वयं में समग्र नहीं था। और पाणिनि-व्याकरण के साथ-साथ संस्कृत व्याकरण की अन्य सभी परम्पराएँ बहुत जटिल और बहुत विस्तृत थी। ऐसे में हेमचन्द्र को राजा का उक्त आग्रह अर्थपूर्ण लगा। उन्होंने राजा की प्रार्थना स्वीकार कर ली और एक सर्वांगपूर्ण व्याकरणग्रन्थ की रचना की। इस ग्रन्थ का नाम हेमचन्द्र ने 'सिद्धहैमशब्दानुशासन' रखा। राजा की इच्छानुसार ग्रन्थ के नाम के आरम्भ में राजा का नाम (सिद्ध) सम्मिलित किया गया। इसके साथ ही ग्रन्थकार ने ग्रन्थ के नाम में अपना नाम (हैम) भी जोड़ दिया। शब्दानुशासन का तात्पर्य व्याकरण से है। इस प्रकार इस ग्रन्थ का पूरा नाम 'सिद्धहैमशब्दानुशासन' रखा गया।

हेमचन्द्र ने 'सिद्धहैमशब्दानुशासन' में संस्कृत के साथ-साथ प्राकृत भाषा के व्याकरण का भी प्रवचन किया गया है। उन्होंने पाणिनि की अष्टाध्यायी का अनुसरण करते हुए अपने 'सिद्धहैमशब्दानुशासन' को आठ अध्याययों में विभाजित किया है। प्रत्येक अध्याय में पाणिनि-अष्टाध्यायी के समान ही चार-चार पाद हैं। ग्रन्थ के प्रारम्भिक सात अध्याययों में संस्कृत भाषा का व्याकरण प्रस्तुत किया गया है। जबकि अन्तिम तथा आठवें अध्याय में प्राकृत भाषा का व्याकरण है। हेमचन्द्र ने प्राकृत भाषा को आर्ष कहा है। द्व्याश्रयमहाकाव्य नामक अपने रचना में हेमचन्द्र ने हैम-व्याकरण के उदाहरणों को सूत्रक्रमनुसार प्रस्तुत किया है। यह महाकाव्य संस्कृत और प्राकृत भाषाओं में लिखा गया है। इसके आदिम २० सर्ग संस्कृत में और अन्त के ८ सर्ग प्राकृत भाषा में निबद्ध हैं। यह ग्रन्थ चालूक्यवंशी राजाओं

की यशोगाथा का वर्णन करता है। इसमें मूलराज से लेकर कुमारपाल तक का जीवनवृत्त दिया गया है। इस प्रकार 'सिद्धहैमशब्दानुशासन' में संस्कृत व्याकरण तथा प्राकृत व्याकरण दोनों के उदाहरण दिये गए हैं। हेमचन्द्र के व्याकरण में वार्तिक नहीं हैं। जैन शाकटायन का अनुसरण करते हुए हेमचन्द्र ने कात्यायन के वार्तिकों के कथ्य को सूत्रों के रूप में ही स्थान प्रदान कर दिया है।

हैम-व्याकरण की रचना शैली कातन्त्र-व्याकरण का विशेष प्रभाव दिखाई देता है। कातन्त्र-व्याकरण की रचनाशैली का ही अनुसरण करते हुए आचार्य हेमचन्द्र अपने शब्दानुशासन को प्रकरणानुसारी बनाया है। इसमें क्रमशः संज्ञा, स्वरसंधि, व्यञ्जनसन्धि, परिभाषा, नाम, कारक, षत्व, णत्व, स्त्रीप्रत्यय, समास, आख्यात, कृदन्त और तद्धित प्रकरण दिये गये हैं। 'सिद्धहैमशब्दानुशासन' के तृतीय अध्याय के दो पादों (द्वितीय एवं तृतीय) तथा चतुर्थ अध्याय में क्रियारूपों का प्रतिपादन किया गया है। हैम-व्याकरण पर जैनेन्द्र तथा शाकटायन का भी बहुत प्रभाव है। हेमचन्द्र ने अन्य संस्कृत व्याकरण-परम्पराओं में पाये जाने वाले दोषों- विस्तार, जटिलता एवं क्रमभङ्ग या अनुवृत्तिबाहुल्य- से अपने व्याकरण को यथासंभव मुक्त रखा है। यद्यपि वे उन सभी परम्पराओं के ऋण को स्वीकारते हैं।

'सिद्धहैमशब्दानुशासन' पर स्वयं हेमचन्द्र ने अनेक स्वोपज्ञवृत्तियाँ लिखी हैं। इन स्वोपज्ञवृत्तियों का नाम लघुवृत्ति, लघुवृत्तिचन्द्रिका, वृहद्वृत्ति, रहस्यवृत्ति तथा बृहन्न्यास है। इन वृत्तियों में उन्होंने अपने से पूर्ववर्ती वैयाकरण आचार्यों के मतों का उनके नामोलेख सहित विवेचन व आलोचन किया है।

आचार्य हेमचन्द्र की इस अमर कृति पर अन्य टीकाकारों ने भी अनेक टीकाएँ लिखी हैं। इन टीकाओं में वृहद्वृत्ति दीपिका, वृहद्वृत्ति-अवचूर्णिका, हेमढुण्डिका तथा न्यायसारसमुद्धार प्रमुख हैं।

**हैम धातुपाठ**

संस्कृत व्याकरण की लगभाग समस्त परम्पराओं में शब्दनुशासन को पांच अगों में विभाजित करके प्रस्तुत करने प्रणाली रही है। इसी कारण व्याकरणशास्त्र के लिए सभी व्याकरण-सम्प्रदायों में 'पञ्चाङ्ग व्याकरण' शब्द का प्रयोग किया जाता है। इन पांच अङ्गों में से प्रथम को सूत्रपाठ तथा शेष चार अङ्गों को खिलपाठ कहा जाता हैं। खिलपाठ में धातुपाठ, उणादिपाठ, गणपाठ तथा लिङ्गानुशासन सम्मिलित हैं। इन पांच अङ्गों में सूत्रपाठ सर्वाधिक प्रमुख है। यह व्याकरणशास्त्र का मूल भाग है। व्याकरण के अन्य चार अङ्गों को गौण माना जाता है। गौण होने के कारण ही उन्हें खिलपाठ नाम दिया गया है। व्याकरणशास्त्र के अध्ययन-अध्यापन में सूत्रपाठ की तुलना में इनकी उपेक्षा होती रही है। चिरकाल से सूत्रपाठ के परिशिष्ट के रूप में ही इनकी प्रयोग होता रहा है। पण्डित युधिष्ठिर मीमांसक ने पठन-पाठन में इन महत्त्वपूर्ण ग्रन्थों के अल्प व्यवहार व उपेक्षा पर खिन्नता व्यक्त की है।

जहाँ तक धातुपाठ का प्रश्न है, धातुओं का प्रवचन व्याकरणशास्त्र के किसी भी परम्परा का एक अनिवार्य अङ्ग होता है। संस्कृत शब्दों की व्याकृति करने वाली समस्त व्याकरणपद्धतियों में धातुओं के प्रवचन का एक व्यवस्थित व प्रणालीबद्ध प्रयास दृष्टिगत होता है। धातुओं के प्रवचन के मूल व आद्य रूप को संस्कृत व्याकरणशास्त्र के विभिन्न सम्प्रदायों में धातुपाठ के रूप में जाना जाता है।

धातुओं का सग्रह करके उनके क्रियारूपों की सरल, समग्र व सुनियोजित निष्पत्ति के लिए व्याकरणतन्त्र के अनेक प्रवकताओं ने अपने-अपने शब्दानुशासन में उन धातुओं की एक विशेष क्रम में जो नियोजना की है उसे ही धातुपाठ कहते हैं।

यद्यपि ऐसा माना जा सकता है कि संस्कृत के सभी व्याकरणतन्त्रों में धातुपाठ का प्रवचन अवश्यमेव किया गया होगा, परन्तु आज पाणिनि-धातुपाठ के अतिरिक्त चान्द्र, जैनेन्द्र, काशकृत्स्न, कातन्त्र, शाकटायन और कविकल्पद्रुम-यह अन्य सात धातुपाठ ही उपलब्ध होते हैं। यद्यपि चान्द्र आदि पाणिनि-उत्तरवर्ती धातुपाठों की अपनी-अपनी मौलिकताएँ व अपनी विशेषताएँ हैं, पुनरपि हम निःशङ्क होकर कह सकते हैं कि उपलब्ध सभी धातुपाठों का प्रवचन पूर्णतया पाणिनि-धातुपाठ को आधार बनाकर ही किया गया है। पाणिनि-धातुपाठ सभी धातुपाठों का उत्स है। हैमधातु पाठ में धातुओं को अकारादिक्रम से रखा गया है। यहाँ तक की अन्तर्गणीय धातुओं को भी अकारादिक्रम से रखा गया है। प्रो० पल्सुले ने इस अर्थ में हैमधातु पाठ को सर्वाधिक वैज्ञानिक धातुपाठ माना है। अकारादिक्रम के सम्बन्ध में एक विशेष बात यह है कि हेमचन्द्र ने 'क्ष' को स्वतन्त्र वर्ण मानकर क्षकारांत धातुओं को हकारांत धातुओं के बाद पढ़ा है। इस धातुपाठ में अनिट् धातुओं को द्योतित करने के लिए धातुओं में अनुबन्ध के रूप में अनुस्वार रखा गया है।

**हैम धातुपाठ की व्याख्याएँ**

हेमचन्द्र के धातुपाठ पर कतिपय टीकाएँ भी लिखी गई हैं। उन टीकाओं में हैम धातुओं, उनके अर्थों व धातुरूपों की निष्पतिप्रक्रिया पर विद्वत्तापूर्ण टिप्पणियाँ की गई हैं। इन टीकाओं में सर्वप्रथम हेमचन्द्र की स्वोपज्ञ टीका है। हेमचन्द्र ने स्वयं अपने धातुपाठ पर 'धातुपारायण' नामक एक व्याख्या लिखी है। यह व्याख्या आकार में विशाल है। इसमें ५६०० श्लोक हैं। पण्डित युधिष्ठिर मीमांसक के अनुसार हेमचन्द्र ने धातुपारायण का एक संक्षिप्त संस्करण भी तैयार किया था। इस संस्करण को 'लघुधातुपारायण' नाम दिया जा सकता है।

धातुपारायण पर 'हैमधातुपारायणटिप्पण' नामक एक अन्य टीका भी प्राप्त होती है। पण्डित मीमांसक के अनुसार यह व्याख्या संवत् १३१६ में लिखी गई है। इस टीका के लेखक का नाम ज्ञात नहीं है।

हैम धातुपाठ पर 'क्रियारत्नसमुच्चय' नाम से एक अन्य टीका भी मिलती है। यह टीका एक श्रेष्ठ रचना है। इसके रचयिता का नाम गुणरत्नसूरि है। पण्डित मीमांसक ने इसके लेखन का समय विक्रम संवत् १४६६ माना है। ग्रन्थकार ने इसमें हैमधातुपारायण की पद्धति का ही अनुसरण किया है। टीकाकार अनेक स्थलों पर धातुसम्बन्धी प्राचीन मतों का विस्तारपूर्वक विवेचन करते चलते हैं।

हैम धातुपाठ पर 'अवचूरी' नामक एक अन्य टीका भी देखने को मिलती है। इस टीका के लेखक जयवीरगणि हैं। पण्डित मीमांसक के अनुसार 'अवचूरी' टीका का निर्माणकाल वि० सं० १५०१ है। इसके अतिरिक्त हैम धातुपाठ पर 'आख्यातवृत्ति' नामक टीका भी मिलती है। इस टीका के लेखक का नाम अज्ञात है।

यहाँ यह वर्णन करना भी आवश्यक है कि हैम धातुपाठ पर श्रीहर्षगणि नामक किसी विद्वान् ने एक पद्यबद्ध व्याख्या भी लिखी थी। इस ग्रन्थ का नाम कविकल्पद्रुम है। इसमें क्रियारूपों की निष्पत्ति से सम्बन्धित विविध पक्षों पर

विस्तृत विवेचना प्रस्तुत की गई है। इसमें ११ पल्लव हैं। प्रथम पल्लव में धातुस्थ अनुबन्धों पर विचार किया गया है। द्वितीय से दशम पल्लव तक नौ गणों का संग्रह है जबकि ग्यारहवें पल्लव में सौत्र धातुएँ दी गई हैं।

**हैमधातुपाठ की विशेषताएँ**

श्री आर.एस. सैनी ने अपनी पुस्तक 'पोस्ट पाणिनीयन सिस्टम्स ऑफ संस्कृत ग्रामर' में हैमव्याकरण के धातुपाठ की कुछ प्रमुख विशेषताओं पर एक विवरण दिया है। नीचे की पंक्तियों में उस विवरण का सार प्रस्तुत है—

जहाँ तक धातुरूपों का प्रश्न है, आचार्य हेमचन्द्र अपने पूर्ववर्ती सर्ववर्मा के कातन्त्र व्याकरण से प्रभावित प्रतीत होते हैं। हेमचन्द्र ने अपने समय की समस्त धातुपाठों का गम्भीर अध्ययन किया। उन अनुभवों को आधार बनाकर के ही, उनके गुण-दोषों की यथासम्भव मीमांसा करके ही, उन्होनें अपने धातुपाठ का स्वरूप निर्धारित किया। यही कारण है कि वे अपने धातुपाठ को अन्य धातुपाठों में पाये जाने वाले दोषों और न्यूनताओं से मुक्त रखने में सफल हो पाये हैं।

हेमचन्द्र ने क्रियारूपों की सिद्धि प्रस्तुत करने से पूर्व वृद्धि और गुण की अवधारणाओं को स्पष्ट किया है। क्योंकि इन दोनों ही अवधारणाओं का धातुओं के स्वरों में परिवर्तन के संबन्ध में बहुत महत्त्व था। उन्होनें क्रियारूपों को सरल और सुबोध बनाने के उद्देश्य से अपने धातुपाठ को धातुओं के स्वरूप के अनुसार अलग-अलग भागों में विभक्त किया है। उन्होंने धातुओं को तीन प्रमुख विभागों में विभक्त किया है। पहले विभाग में वे धातुएँ सम्मिलित हैं जिनका गणों में वर्गीकरण किया गया है। दूसरे विभाग में वे धातुएँ सम्मिलित हैं जो नामपदों में प्रत्यय लगाकर क्रियारूप बनाये जाते हैं। ऐसी धातुओं को संस्कृत व्याकरण के लगभग सभी सम्प्रदायों में नामधातु कहा गया है। तीसरे विभाग में केवल वही धातुएँ सम्मिलित हैं जिनका प्रयोग हैमव्याकरण में किया गया है और लौकिक संस्कृत में जिनका कहीं प्रयोग नहीं होता है। प्रथम विभाग की धातुओं को हेमचन्द्र ने नौ गणों में विभाजित किया है। गणों का यह विभाजन पाणिनिकृत धातुपाठ से भिन्न है, क्योंकि पाणिनि ने अपने धातुपाठ में धातुओं को दस गणों में विभाजित किया है। हेमचन्द्र ने कातन्त्र और काशकृत्स्न धातुपाठ का अनुसरण करते हुए पाणिनि के जुहोत्यादिगण को अदादिगण का ही एक उपविभाग माना है। हेमचन्द्र ने धातुओं को जिन नौ गणों में विभाजित किया है वे निम्न हैं—

१. अदादिगण

२. दिवादिगण

३. स्वादिगण

४. तुदादिगण

५. रुधादिगण

६. तनादिगण

७. क्र्यादिगण

८. चुरादिगण

९. भ्वादिगण

हेमचन्द्र के धातुपाठ की एक अन्य प्रमुख विशेषता यह है कि उन्होंने धातुपाठ में आए हुए प्रत्येक धातु के अन्त में एक अनुबन्ध रखा है। उस अनुबन्ध को देखकर धातुपाठ का अध्येता अच्छी तरह से जान लेता है कि कौन सी धातु किस गण की है। हेमचन्द्र ने ऐसे आठ अनुबन्धों का प्रयोग किया है। ये अनुबन्ध व्यंजन के रूप में ही है। आठ अनुबन्ध आठ भिन्न-भिन्न गणों को इंगित करते हैं। एक गण की धातुओं में उन्होंने कोई अनुबन्ध नहीं पढ़ा है। ये सभी धातुएँ भ्वादिगण की धातुएँ हैं। पाणिनि के धातुपाठ में भ्वादिगण प्रथम गण है जबकि हेमचन्द्र के धातुपाठ में यह अन्तिम गण है। हेमचन्द्र के द्वारा उक्त आठ अनुबन्ध निम्न हैं—

अदादयः कानुबन्धाश्चानुबन्धा दिवादयः।

स्वादयष्टानुबन्धास्तानुबन्धास्तुदादयः।।

रुधादयः पानुबन्धाः यानुबन्धास्तनादयः।

क्र्यादयः शानुबन्धा णानुबन्धाश्चुरादयः।।

– हैमलघुप्रक्रिया

अर्थात् –

१. जिन धातुओं के अन्त में क् अनुबन्ध पढ़ा गया है वे धातुएँ अदादिगण की धातुएँ हैं।

२. जिन धातुओं के अन्त में च् अनुबन्ध पढ़ा गया है वे दिवादिगण की धातुएँ हैं।

३. जिन धातुओं के अन्त में ट् अनुबन्ध में पढ़ा गया है वे धातुएँ स्वादिगण की हैं।

४. जिन धातुओं के अन्त में त् अनुबन्ध पढ़ा गया है, वे तुदादिगण की धातुएँ हैं।

५. जिन धातुओं के अन्त में प् अनुबन्ध में पढ़ा गया है वे रुधादिगण की धातुएँ हैं।

६. जिन धातुओं के अन्त में य् अनुबन्ध में पढ़ा गया है वे धातुएँ तनादिगण की हैं।

७. जिन धातुओं के अन्त में स् अनुबन्ध में पढ़ा गया है वे धातुएँ क्रियादिगण की हैं।

८. जिन धातुओं के अन्त में न् अनुबन्ध में पढ़ा गया है वे धातुएँ चुरादिगण की हैं।

यह हेमचन्द्राचार्य की नूतन परिकल्पना है। संस्कृत व्याकरण के अन्य धातुपाठों में यह परिकल्पना कहीं भी दिखाई नहीं देती।

धातुरूपों की निष्पत्ति-प्रक्रिया में हेमचन्द्र कातन्त्र व्याकरण के ऋणी हैं। कातन्त्र व्याकरण की शैली में ही उन्होंने पाणिनिविहित लट् आदि लकारों के स्थान में 'वर्तमान' आदि अन्वर्थ संज्ञाओं का विधान किया है। वे अपनी व्याकरण में लट् लकार के लिए 'वर्तमान', लिट् लकार के लिए 'परोक्ष', लुट् लकार के लिए 'श्वस्तनी', लट् लकार के लिए 'भविष्यन्ती', लोट् लकार के लिए 'पंचमी', लङ् लकार के लिए 'ह्यस्तनी', विधिलिङ् के लिए 'सप्तमी', आशीर्लिङ् के लिए 'आशीः', तथा लृङ् लकार के लिए 'क्रियातिपत्ति' शब्द का प्रयोग करते हैं। पाणिनि द्वारा विहित लेट् लकार के वर्ण्यविषय को हैम-व्याकरण में छोड़ दिया गया है। क्योंकि लेट् लकार का विषय मात्र वैदिक भाषा है। पारिभाषिक शब्दों के रूप में लट् आदि के लिए 'वर्तमान' आदि का शब्दों या संज्ञाओं का प्रयोग इनके अर्थबोध को अधिक सुकर व अधिक सुस्पष्ट बना देता है। पाणिनि को अष्टाध्यायी में लकार आदि के अर्थों का प्रतिपादन करने के

लिए अलग से सूत्रों की रचना करनी पड़ती है। जबकि लौकिक व्यवहार के शब्द होने के कारण व अन्वर्थ होने के कारण हैमव्याकरण में वर्तमान, ह्यस्तनी आदि शब्दों को परिभाषित करना आवश्यक नहीं होता।

धातुरूपों की निष्पत्ति-प्रक्रिया के सम्बन्ध में हेमचन्द्र की एक अन्य विशेषता भी है। पाणिनि ने अष्टाध्यायी में प्रथमतः दस लकारों का विधान किया है तथा बाद में उनके स्थान पर तिप्, तस् आदि १८ आदेशों का विधान किया है। इन १८ आदेशों में से प्रथम ९ आदेश परस्मैपदी धातुओं के साथ तथा बाद के ९ आदेश आत्मनेपदी धातुओं के साथ जुड़ते हैं। प्रत्येक लकार में तिप् आदि प्रत्ययों का स्वरूप परिवर्तित होता चला जाता है। पाणिनि को भिन्न-भिन्न लकारों में घटित होने वाले इन परिवर्तनों की व्यवस्था के लिए भिन्न-भिन्न सूत्रों की रचना करनी पड़ती है। आचार्य हेमचन्द्र ने इस लम्बी तथा जटिल प्रक्रिया से बचने के लिए वर्तमान आदि प्रत्येक लकार के स्थान में भिन्न-भिन्न १८ प्रत्ययों का विधान किया। इस तरह वे पाणिनि के दस लकारों के स्थान में १८० प्रत्ययों की व्यवस्था करते हैं। वर्तमान आदि में विहित प्रत्येक १८ प्रत्ययों में आदि के ९ को परस्मैपद और शेष ९ को आत्मनेपद नाम दिया गया है।

हेमचन्द्र ने शतृ और क्वसु प्रत्ययों को परस्मैपदी धातुओं के साथ जोड़ने का विधान किया है। उन्होंने धातुओं से आत्मनेपदी और परस्मैपदी प्रत्ययों की व्यवस्था के लिए पाणिनि की पद्धति का ही अनुसरण किया है। नौ गणों की धातुओं से, यदि वे इदित् व नित् हैं तो अथवा यदि क्रिया का फल कर्त्ता को मिल रहा है तो आत्मनेपदी धातुओं का विधान किया गया है। इगित् धातुओं से आत्मनेपदी तथा परस्मैपदी दोनों प्रत्यय आते है। ऐसी धातुओं को हेमचन्द्र ने उभयपदी कहा है। पाणिनि के समान ही हेमचन्द्र का नियमन है कि जो धातुएँ उक्त दो प्रकार की धातुओं से भिन्न हैं, उनसे परस्मैपदी प्रत्यय हों। पाणिनिव्याकरण के समान ही हैमव्याकरण में भी धातुरूपों की निष्पत्ति-प्रक्रिया में विकरणों की व्यवस्था की गई है। इन विकरणों से काल, वाच्य आदि का प्रतिपादन होता है। पाणिनि के शप् के स्थान पर हेमचन्द्र ने शव् प्रत्यय का विधान किया है। इस प्रत्यय का विधान धातुसामान्य से किया गया है।

अदादिगण की धातुओं से शव् विकरण नहीं होता है। दिवादि धातुओं से श्य, स्वादि धातुओं से श्नु, तुदादि धातुओं से श, रुदादि धातुओं से श्ना, तनादि धातुओं से उ, क्रियादि धातुओं से श्नम् तथा चुरादिगणपठित धातुओं से णिच् प्रत्यय का विधान किया गया है। इन प्रत्ययों को पारिभाषिक शब्द में विकरण कहा जाता है। इन विकरणों में स्थित अनुबन्धों के गुण आदि प्रयोजन हैं। प्रेरणा अर्थ में संस्कृत की सभी धातुओं का स्वरूप परिवर्तित हो जाता है। पाणिनिविहित णिच् के स्थान पर हेमचन्द्र ने प्रेरणा अर्थ में धातुमात्र से णिग् प्रत्यय का विधान किया है। णिग् प्रत्यय का णित्-करण धातुओं में अ, ई और उ वर्णों में वृद्धि के निमित्त किया गया है। प्रत्यय का गित्-करण यह प्रतिपादित करने के लिए है कि णिजन्त धातुओं का प्रयोग आत्मनेपदी तथा परस्मैपदी दोनों ही धातुओं में किया जा सकता है। जब णिजन्त धातुओं से परस्मैपदी प्रत्यय जोड़े जाते हैं तो धातु सकर्मक होगा। णिजन्त धातुओं का प्रयोग सभी कालों तथा लकारों में होता है। इच्छा के अर्थ में पाणिनि के समान हेमचन्द्र आचार्य भी सन् प्रत्यय का विधान करते हैं। और सन् प्रत्यय की स्थिति में धातु को द्वित्व हो जाता है। शुद्ध कर्तृप्रक्रिया के समान सनन्त धातुओं से भी पूर्वोक्त विकरण हो जाते हैं।

क्रिया के पौन:पुन्य अर्थ में हेमचन्द्र भी यङ् प्रत्यय का विधान करते हैं। यङ् में ङ् का अनुबन्ध आत्मनेपद के लिए है। यङ् में भी सन् के समान धातुओं को द्वित्व हो जाता है। पाणिनिव्याकरण के समान हैमव्याकरण में भी यङ्लुगन्त धातुओं की निष्पत्ति-प्रक्रिया प्रदर्शित की गई है। यह भी क्रिया के पौन:पुन्य अर्थ को ही प्रतिपादित करता है। यङ्लुगन्त धातुओं से सर्वदा परस्मैपदी प्रत्यय ही होते हैं। हेमचन्द्र ने नामधातुओं का भी निरूपण किया है। नामधातुओं में काम्य, क्यङ्, णिच्, क्विप्, तथा क्यन् प्रत्ययों का विधान किया गया है। हेमचन्द्र ने ह्यस्तनी, अद्यतनी, तथा क्रियातिपत्ति की स्थिति में धातु के आदि में अट् आगम का विधान किया है। पाणिनि के समान हेमचन्द्र लुङ् लकार में च्लि प्रत्यय करके उसके स्थान में अङ्, क्स्, चङ् तथा चिण् आदेश का विधान नहीं करते हैं। अपितु उन्होंने सीधे ही सिच् आदि प्रत्ययों की व्यवस्था की है। हैमव्याकरण के चतुर्थ अध्याय के अन्तिम पाद में धातुओं में होने वाले परिवर्तनों तथा धातु के स्थान में होने वाले आदेशों का विवरण प्रस्तुत किया गया है। धातुरूपों की निष्पत्ति प्रक्रिया में उक्त विवरण अतिमहत्त्वपूर्ण है। हेमचन्द्र ने अपने व्याकरणतन्त्र में धातुओं में इट्-अनिट् की व्यवस्था के लिये भी एक विस्तृत प्रकरण निर्धारित किया है।

श्रीमज्जिनपुङ्गवेभ्यो नमः

सकलस्वपरसमयपारावारपारीण-तीर्थसंरक्षणप्रवण-विद्यापीठादिप्रस्थानपञ्चकसमाराधक-तपोगच्छाधिपति-भट्टारकाचार्यवर्य-परमगुरुश्रीमद्विजयनेमिसूरिभगवद्भ्यो नमः

श्रीमत्तपोगणगगनाङ्गणगगनमणि-सार्वसार्वज्ञशासनसार्वभौम-तीर्थरक्षणपरायण-कोविदकुलालङ्कार-अखण्डविजयश्रीमद्गुरुराज-विजयनेमिसूरीश्वर-चरणारविन्दचञ्चरीकायमाणान्तिषन्मुनिलावण्यविजयप्रणीतो

# धातुरत्नाकरः

लोकालोकावलोके विलसति विमला केवलार्चिर्यदीया
देवादेवाधिदेवैररचि च चरणार्चा च नित्यं यदीया।
गावो नावो नवीना घनभवजलधेस्तारणेऽरं यदीया
आप्ताः प्राप्ताः शिवं ते जिनवरप्रवरा नो नयन्तां शमालिम्॥१॥

लब्धानेकार्थसार्थो मकरधिमधरीकृत्य यः सत्तयास्ते
उद्यत्कल्लोलमालाऽपि जडपरिणतिर्गाहते यश्च नित्यम्।
सद्वंशो वारिराशौ सदमृतसरणिं संसृतौ संसृतोऽस्तु
पोतः श्रीनाभिसूतः विलसनवसतिः धीवराणां नराणाम्॥२॥

भव्यग्रामानुशासी चरणजयकृतौ सिंहकल्पश्च शास्त्र-
विद्यादक्षः प्रदाता प्रतिदिनरजनि क्षेत्रभृद्राज्यभीतेः।
यो नित्यं दान्तराजैर्विहरति च सदाचारलब्धस्वरूपः
श्रीशान्तिं तं क्षमाभृन्निकर उभयतश्चक्रिणं नन्नमीमि॥३॥

विस्फूर्जत्स्फीतवाचो नरसुरकुरुहः प्राणिनां वाञ्छितार्थ-
दाने मीनः सदावस्थितिभृत उदरे शान्तिसिन्धोर्विहाय।
कान्तां भौगीञ्च राजीं मदनमदजितस्तीर्थराजः प्रभासः
आधिव्याधिप्रहीणं शमधि विदधतामक्षरस्थानमिज्यम्॥४॥

(उपजातिः)

जडप्रधानोऽपरभङ्गगोऽपि सपङ्कजातः सगरान्वयोऽपि।
नीचः प्रकृत्या मृततां गतोऽपि सप्ताम्बुराशिप्रकरः पृथिव्याम्॥५॥
यच्छन्नसप्तस्फटशालिनागाधिराजदम्भात्कृतसेवनातः।
महाशयत्वञ्च जगाम नित्यं पायादपायाज्जिनपः स पार्श्वः॥६॥ युग्मम्॥

(शार्दूलविक्रीडितम्)

यस्माद् बोधति चेदकं कुवलयं यस्तारकाल्याञ्चितः
सर्वाशासुखसम्पदुल्लसनकृन्नित्यं सुधामाश्रयन्।
यश्चञ्चद्धरिणाङ्कितः शमनिधिः सद्वृत्तसौभाग्यभूः
वन्देऽज्ञानतमोऽपनोदनकृते वीरं तमीशं सदा॥७॥

(शिखरिणी)

लसन्ती या नित्यं सरससुमनोमानसमिता
जलौल्लासी पक्षैः विलसितमरुद्भिः शुचितरैः।
कलध्वाना दीव्यद्गतिरुपनता मौक्तिकफलैः
सदा जैनी वाणी सुजयति मरालीव नितराम्॥८॥

(शार्दूलविक्रीडितम्)

पूज्यः श्रीयुतवृद्धिचन्द्र इह स प्रद्योतते पुण्यकृ-
च्चाकोरामदवृद्धिचन्द्र इव यश्चन्द्रश्च शान्त्याकरः।
सिद्धान्तोदधिवृद्धिचन्द्र उपमातीतः सतां हृत्सरः-
सम्वित्कैरववृद्धिचन्द्र उदिते पापातपे वारिदः॥९॥
सौवर्णाद्रिरिव क्षमाधरवरो मध्यस्थभावं गतो
भक्तिभ्राजितवैबुधाश्रितपदः काष्ठान्तप्रापिस्थितिः।
जैनेन्द्रागमजातचारुविभवः कल्याणरूपश्च यः
भव्यानां स तनोतु मङ्गलततिं श्रीनेमिसूरिप्रभुः॥१०॥
संसारार्णवपारप्रापणविधौ पोतायमानो नृणा-
मत्युद्भासितभिक्षुभावगरिमा विज्ञाततन्त्रावलिः।

श्रीमन्नेमिगुरुः प्रभूतकरणः सोऽयं सदानन्दनं
दद्यात्सद्गुणशालि चामृतपदं लावण्यसन्मन्दिरम्।।११।।

(स्रग्धरा)

कम्रालङ्काररम्या रुचिरतरपदन्याससौम्या प्रसन्ना
नानाश्लेषातिदक्षा स्वमधुरतया कर्णयुग्मापहारी।
विस्फूर्जत्स्फीतभावा नवरसहृदया चारुवर्णाभिरामा
कान्तेवासौ नवीना भुवि जयतितरां भारती नेमिसूरेः।।१२।।

(उपजातिः)

यः सर्वदारोचितचित्तवृत्ति-स्तथाप्यदारोचितचित्तवृत्तिः।
सिद्धेषु रागान्वितचित्तवृत्तिस्तथापि सिद्धान्तसुचित्तवृत्तिः।।१३।।
समाश्रितोऽधामतया सदापि श्रितः स्फुरद्धामतया तथापि।
सदर्पणो दर्पणारिक्तकोऽपि सनेमिसूरिर्जयताज्जगत्याम्।।१४।।

(अनुष्टुप्)

वर्णवर्गान्तिमत्त्वेऽपि निजनामावलम्बिनौ।
नमौ गुणश्रिया योज्यस्पर्शभावं नयन्ति ये।।१५।।
तेषां श्रीनेमिसूरीणां गुरूणां पादसेवया।
नायन्ति किमु दक्षत्वं मादृशा जडशेखराः।।१६।।
लावण्यविजयेनाथ तेषामन्तिषदा मया।
प्रणुन्नेन कृतः सर्वधातुरूपदिदृक्षुभिः।।१७।।
चित्रितश्चित्ररूपैश्च श्रितो हेमादिलक्षणैः।
चुराद्यन्तगणैर्गुप्तः प्रक्रियाभिः परिष्कृतः।।१८।।
दधातु धातुरत्नानामाकरो बहुधातुषम्।
अवित्तचित्तवृत्तिषु मयि च स्मृतिमद्भुताम्।।१९।।

इह हि तावन्निजनिर्मितामितकर्ममर्मोपनीतच्युतिप्रसूतिपानीयपरिप्लाविते अस्ताघभवनिर्माणनिपुणकषाय-पातालपरिष्कृते विशिष्टभ्रान्तिसम्पादनप्रौढप्रतापमोहावर्त्तपल्लविते संख्यातीतव्यसनजलचरदुर्ललिते निरन्तरप्रसृत्वरा-ज्ञानानिलेरितसंयोगवियोगादिवीचिनिचयोपचिते आधिव्याधिवडवानलकरालिते भीमे भवपाथोधौ निमज्जतां दुःखोद्विग्नमनसां सुखैकलिप्सूनां तनुभृतां तस्मात्सन्तरणैकप्रवणम् उपशमादिसुबन्धनबद्धसम्यग्दर्शनकूपकाभिरामम् अतुलज्ञानमयकर्णधाराध्यासितप्रशस्तदेशं वरसंवरावृतविवरवारं दुस्तपतपोऽनिलाहितपटुतरवेगं महार्घशीलाङ्गरत्नराजि-

विराजितमतिनिपुणायव्ययपूर्वकप्रवर्तनशीलवाचंयमवणिग्वरविभूषितममन्दानन्दसन्दोहनिधाननिर्वाणपुरप्रापणैकप्रवणं चारित्रमयपवित्रप्रवहणमिति सर्वजनसिद्धम्।

एतच्चारित्रमयपवित्रप्रवहणमपि पदपदार्थज्ञानद्वारोत्पन्नहेयोपादेयज्ञानपूर्वकम्। पदपदार्थज्ञानमपि नयनिक्षेपादिभिरधिगमोपायैः परमार्थतः, व्यवहारतस्तु प्रकृत्यादिभिः।। ताश्च प्रकृतयः पूर्वाचार्यप्रसिद्धा एव सुखग्रहण-स्मरणकार्यसंसिद्धये विशिष्टानुबन्धसम्बन्धक्रमा अर्थसहिताः प्रस्तूयन्ते। तत्र यद्यपि नामधातुपदभेदाद् "राजा जयति पूर्वाह्णेतरां पचतितराम्" इत्यादौ त्रेधात्प्रकृतिस्तथापि नामपदरूपं यत्प्रकृतिद्वयं तस्य धातुमूलत्वाद् धातुप्रकृतिरेवैका प्रधानम्। तथा ये शब्दानामव्युत्पत्तिपक्षमाश्रयन्ति तेषामपि व्युत्पत्तिपक्षानुसारेणैव शब्दस्वरूपनिर्णय इति तत्रापि धातुमूलत्वमबाधितमेव। धातुप्रकृतिश्च द्वेधा शुद्धा प्रत्ययान्ता च। शुद्धा 'भू' इत्यादि, प्रत्ययान्ता च "गोपाय कामि ऋतीय जुगुप्स कण्डूय बोभूय बोभू चोरि भावि बुभूष" इत्यादिरूपा। एषा प्रत्ययान्तापि प्रकृतिः शुद्धमूलैवेति शुद्धैवात्रादावुदाह्रियन्ते।

१ भू सत्तायाम्। भू इत्यविभक्तिको निर्देशः। सकारान्तरकारान्तभ्रमापाकरणार्थम्। न च धातुत्वेन नामत्वाभावात्कथं भूः इति प्रयोगः सम्भवेदिति शंक्यम्। नायं धातुरपि तु भवति इत्यादिषु योज्यमानभूधातोरनुकरणं तस्मात्तस्मात्सम्भवति विभक्तिः। न च तर्हि निरुक्तशङ्कोपायान्तरेणापनेया अपि तु सविभक्तिक एव प्रयोगः कर्त्तव्यः, निर्विभक्तिकप्रयोगस्य शिष्टासम्मतत्वादिति वाच्यम्, यदा अनुकार्यानुकरणयोः स्याद्वादाश्रयेणाभेदविवक्षा तदार्थत्त्वाभावान्न भवति नामसंज्ञा इति तत्कल्पे निर्विभक्तिक एव प्रयोगः शिष्टसम्मतो, यदा च भेदविवक्षा तदा अनुकार्येणार्थेनार्थवत्त्वात् नामसंज्ञा भवत्येव इति तत्र पक्षे सविभक्तिक एव प्रयोगः शिष्टसम्मतः। प्रस्तुते च प्रथमकल्पादरणात्सर्वशङ्का निरस्ता।। एवं सर्वत्राप्यूह्यम्। भू इत्येषा प्रकृतिः सत्तायां वर्त्तते। अभूत् भूत इत्यादौ ऊकारस्य प्रयोगित्वदर्शनात् "अप्रयोगीत्" इति इत्संज्ञा न भवति। एवमन्यत्रापि। वर्णसमाम्नायक्रमेण स्वरान्तव्यञ्जनान्तधातूपदेशप्रतिज्ञानात् "पां पाने" इत्यादेः प्रथमं निर्देशे प्राप्तेऽपि वृद्धसमयानुवर्त्तनार्थं प्रथममस्य पाठः। यदाहुर्वृद्धाः- 'भ्वादयः धातवः' इति मङ्गलार्थमपि, यदाह- माङ्गलिकत्वात् प्रथममस्य प्रयोग इति, माङ्गलिकत्वञ्चास्य वृद्धादवसेयम्, एवमदादिगणेष्वपि वृद्धसमयानुवर्त्तनमदिप्रभृतीनां प्राग्निर्देशे प्रयोजनमभ्यूह्यम्। ननु सत्तेति कोऽर्थ इति चेदुच्यते, सतो भावः सत्ता, अस्तित्वं, द्रव्यधर्मो धात्वर्थसामान्यमिति यावत्। यदाहुः—

**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः।**
**प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते।।**

तां प्रातिपदिकार्थञ्च धात्वर्थं च प्रचक्षते। इति सेति सत्ता। अपि च-धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते। तथा यत्रान्यत्क्रियापदं न श्रूयते तत्रास्तीति भवन्तीपरं प्रयोक्तव्यमिति। अत्राह- ननु भुवः सत्तावाचित्वे धातुत्वमनुपपन्नम्। क्रियार्थो हि धातुः, क्रिया च स्पन्दनरूपा। सत्ता तु द्रव्यादिषु सत्सदित्यनुवृत्तप्रत्ययाभिधानलिङ्गा स्पन्दरूपा न भवति। नैष दोषः, यथा "जानाति पश्यति स्मरति श्रद्धते संयुज्यते समवैति वियुज्यते नश्यति श्वेतते" इत्यादीनां ज्ञानदर्शनस्मरणश्रद्धानसंयोगसमवायवियोगाविनाशवर्णादयो द्रव्यगुणा अपरिस्पन्दात्मका अपि

आख्यातप्रकृतिवाच्याः सन्तः क्रियाव्यपदेशमर्हन्ति। एवं सत्तापि द्रव्यधर्मो धातुवाच्यतामापाद्यमाना क्रियाव्यपदेशं लप्स्यते। मणिमुकुरकृपाणादिज्ञापकवैचित्र्याद्यैकरूपस्यापि मुखादेर्नानात्वोपलब्धेर्धातुवाच्यैव सत्ता क्रियात्वमास्कन्दति न प्रातिपदिकवाच्येति नाव्यवस्था।

किञ्च पाकादिक्रियाणां त्रैकाल्याभिव्यञ्जकत्वमुपलब्धं पचति पक्ष्यति अपाक्षीत् जानाति ज्ञास्यति अज्ञासीत् इत्यादि। तद्येहापि भवति भविष्यति अभूदिति धातुवाच्यायां सत्तायामुपलभ्यमानं क्रियात्वं व्यवस्थापयति। अत एव वृक्ष इत्यादिप्रातिपदिकवाच्यायाः सत्ताया न क्रियात्वम्। एवं स्थिते क्रियावाचित्वमात्रमाख्यातुं सत्तोपात्ता। अर्थान्तराण्यपि अनयोपलक्ष्यन्ते। यदाहुः—

**निपाताश्चोपसर्गाश्च धातवश्चेति ते त्रयः।**
**अनेकार्थाः स्मृताः सर्वे पाठस्तेषां निदर्शनम्।।** इति

तथा च भूरयं क्वचिदस्त्यर्थे वर्त्तते। यथा बहूनि धनान्यस्य भवति सन्तीत्यर्थः क्वाप्यभूतप्रादुर्भावे। यथा वचाक्षीरभोजिन्याः श्रुतधरः पुत्रो भवति जायते इत्यर्थः। क्वचिदभूततद्भावाख्ये सम्पद्यर्थे। यथा अशुक्लः शुक्लो भवति सम्पद्यते इत्यर्थः। एवमुपसर्गावशाद्य धातोरनेकोऽर्थः प्रकाशते। यथा प्रभवतीति स्वाम्यर्थः प्रथमतः उपलम्भश्च। पराभवति परिभवति अभिभवतीति तिरस्कारः। सम्भवतीति जन्मार्थः प्रमाणानतिरेकेण धारणञ्च। अनुभवतीति संवेदनम्। विभवतीति व्याप्तिः। आभवतीति भागागतिः। उद्भवतीति उद्भेदः प्रतिभवतीति लग्नकत्वमिति अथवार्थान्तरेष्वपि क्रिया सामान्यरूपा सत्ताऽनुवर्त्तते एवेति सत्ताया एवोपादानं कृतम्। सत्ताव्यतिरेकीणि ह्यर्थान्तराणि खरविषाणायमानानि स्युः। षड्भावविकारा इति वचनाद्य भावः सत्तासामान्यरूपा क्रियेत्यवसीयते। यदाहुः-जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यतीति षड् भावविकारा इति। अपि च सर्वेऽपि खलु धातवस्तेन तेनोपाधिना सत्तामेवावच्छिद्यावच्छिद्य विषयीकुर्वन्तीति सा क्रिया सामान्यमित्युच्यते। तथा च "क्रियार्थो धातुः" इति भुवो धातुत्वमित्यलं पल्लवितेन।



## भू सत्तायाम्

**वर्त्तमाना (लट्)** Present.

| | | |
|---|---|---|
| भवति | भवतः | भवन्ति |
| भवसि | भवथः | भवथ |
| भवामि | भवावः | भवामः |

**सप्तमी (विध्यर्थ) (लिङ्)** Potential.

| | | |
|---|---|---|
| भवेत् | भवेताम् | भवेयुः |
| भवेः | भवेतम् | भवेत |
| भवेयम् | भवेव | भवेम |

**पञ्चमी (आज्ञार्थ) (लोट्)** Imperative.

| | | |
|---|---|---|
| भवतु/भवतात् | भवताम् | भवन्तु |
| भवः/भवतात् | भवतम् | भवत |
| भवानि/भवतात् | भवाव | भवाम |

**ह्यस्तनी (लङ्)** Imperfect.

| | | |
|---|---|---|
| अभवत् | अभवताम् | अभवन् |
| अभवः | अभवतम् | अभवत |
| अभवम् | अभवाव | अभवाम् |

**अद्यतनी (लुङ्)** Aorist

| | | |
|---|---|---|
| अभूत् | अभूताम् | अभूवन् |
| अभूः | अभूतम् | अभूत |
| अभूवम् | अभूव | अभूम |

**परोक्षा (लिट्)** Perfect.

| | | |
|---|---|---|
| बभूव | बभूवतुः | बभूवुः |
| बभूविथ | बभूवथुः | बभूव |
| बभूव | बभूविव | बभूविम |

**आशीः-(लिङ्)** Benedictive.

| | | |
|---|---|---|
| भूयात् | भूयास्ताम् | भूयासुः |
| भूयाः | भूयास्तम् | भूयास्त |
| भूयासम् | भूयास्व | भूयास्म |

**श्वस्तनी (लुट्)** I Future.

| | | |
|---|---|---|
| भविता | भवितारौ | भवितारः |
| भवितासि | भवितास्थः | भवितास्थ |
| भवितास्मि | भवितास्वः | भवितास्मः |

**भविष्यन्ती (लृट्)** II Future.

| | | |
|---|---|---|
| भविष्यति | भविष्यतः | भविष्यन्ति |
| भविष्यसि | भविष्यथः | भविष्यथ |
| भविष्यामि | भविष्यावः | भविष्यामः |

**क्रियातिपत्तिः (लृङ्)** Conditional

| | | |
|---|---|---|
| अभविष्यत् | अभविष्यताम् | अभविष्यन् |
| अभविष्यः | अभविष्यतम् | अभविष्यत |
| अभविष्यम् | अभविष्याव | अभविष्याम |

**॥ अथादन्ताः शडनिटश्च॥**

## २. पां(पा) पाने।

| | | | |
|---|---|---|---|
| व० | पिबति | पिबतः | पिबन्ति |
| | पिबसि | पिबथः | पिबथ |
| | पिबामि | पिबावः | पिबामः |
| स० | पिबेत् | पिबेताम् | पिबेयुः |
| | पिबेः | पिबेतम् | पिबेत |
| | पिबेयम् | पिबेव | पिबेम |
| प० | पिबतु/पिबतात् | पिबताम् | पिबन्तु |
| | पिब/पिबतात् | पिबतम् | पिबत |
| | पिबानि | पिबाव | पिबाम |
| ह्य० | अपिबत् | अपिबताम् | अपिबन् |
| | अपिबः | अपिबतम् | अपिबत |
| | अपिबम् | अपिबाव | अपिबाम |
| अ० | अपात् | अपाताम् | अपुः |
| | अपाः | अपातम् | अपात |
| | अपाम् | अपाव | अपाम |
| प० | पपौ | पपतुः | पपुः |
| | पपाथ/पपिथ | पपथुः | पप |
| | पपौ | पपिव | पपिम |
| आ० | पेयात् | पेयास्ताम् | पेयासुः |
| | पेयाः | पेयास्तम् | पेयास्त |
| | पेयासम् | पेयास्व | पेयास्म |
| श्व० | पाता | पातारौ | पातारः |
| | पातासि | पातास्थः | पातास्थ |
| | पातास्मि | पातास्वः | पातास्मः |
| भ० | पास्यति | पास्यतः | पास्यन्ति |
| | पास्यसि | पास्यथः | पास्यथ |
| | पास्यामि | पास्यावः | पास्यामः |
| क्रि० | अपास्यत् | अपास्यताम् | अपास्यन् |
| | अपास्यः | अपास्यतम् | अपास्यत |
| | अपास्यम् | अपास्याव | अपास्याम |

### ३. घ्रां (घ्रा) गन्धोपादाने।

| | | | |
|---|---|---|---|
| व० | जिघ्रति | जिघ्रतः | जिघ्रन्ति |
| | जिघ्रसि | जिघ्रथः | जिघ्रथ |
| | जिघ्रामि | जिघ्रावः | जिघ्रामः |
| स० | जिघ्रेत् | जिघ्रेताम् | जिघ्रेयुः |
| | जिघ्रेः | जिघ्रेतम् | जिघ्रेत |
| | जिघ्रेयम् | जिघ्रेव | जिघ्रेम |
| प० | जिघ्रतु/जिघ्रतात् | जिघ्रताम् | जिघ्रन्तु |
| | जिघ्र/जिघ्रतात् | जिघ्रतम् | जिघ्रत |
| | जिघ्राणि | जिघ्राव | जिघ्राम |
| ह्य० | अजिघ्रत् | अजिघ्रताम् | अजिघ्रन् |
| | अजिघ्रः | अजिघ्रतम् | अजिघ्रत |
| | अजिघ्रम् | अजिघ्राव | अजिघ्राम |
| अ० | अघ्रात् | अघ्राताम् | अघ्रुः |
| | अघ्राः | अघ्रातम् | अघ्रात |
| | अघ्राम् | अघ्राव | अघ्राम |
| | | तथा | |
| | अघ्रासीत् | अघ्रासिष्टाम् | अघ्रासिषुः |
| | अघ्रासीः | अघ्रासिष्टम् | अघ्रासिष्ट |
| | अघ्रासिषम् | अघ्रासिष्व | अघ्रासिष्म |
| प० | जघ्रौ | जघ्रतुः | जघ्रुः |
| | जघ्राथ/जघ्रिथ | जघ्रथुः | जघ्र |
| | जघ्रौ | जघ्रिव | जघ्रिम |
| आ० | घ्रेयात् | घ्रेयास्ताम् | घ्रेयासुः |
| | घ्रेयाः | घ्रेयास्तम् | घ्रेयास्त |
| | घ्रेयासम् | घ्रेयास्व | घ्रेयास्म |
| | | तथा | |
| | घ्रायात् | घ्रायास्ताम् | घ्रायासुः |
| | घ्रायाः | घ्रायास्तम् | घ्रायास्त |
| | घ्रायासम् | घ्रायास्व | घ्रायास्म |
| श्व० | घ्राता | घ्रातारौ | घ्रातारः |
| | घ्रातासि | घ्रातास्थः | घ्रातास्थ |
| | घ्रातास्मि | घ्रातास्वः | घ्रातास्मः |
| भ० | घ्रास्यति | घ्रास्यतः | घ्रास्यन्ति |
| | घ्रास्यसि | घ्रास्यथः | घ्रास्यथ |
| | घ्रास्यामि | घ्रास्यावः | घ्रास्यामः |
| क्रि० | अघ्रास्यत् | अघ्रास्यताम् | अघ्रास्यन् |
| | अघ्रास्यः | अघ्रास्यतम् | अघ्रास्यत |
| | अघ्रास्यम् | अघ्रास्याव | अघ्रास्याम |

### ४. ध्मां (ध्मा) शब्दाग्निसंयोगयोः।

**शब्दे मुखादिना चाग्निसंयोगे।**

| | | | |
|---|---|---|---|
| व० | धमति | धमतः | धमन्ति |
| | धमसि | धमथः | धमथ |
| | धमामि | धमावः | धमामः |
| स० | धमेत् | धमेताम् | धमेयुः |
| | धमेः | धमेतम् | धमेत |
| | धमेयम् | धमेव | धमेम |
| प० | धमतु/धमतात् | धमताम् | धमन्तु |
| | धम/धमतात् | धमतम् | धमत |
| | धमानि | धमाव | धमाम |
| ह्य० | अधमत् | अधमताम् | अधमन् |
| | अधमः | अधमतम् | अधमत |
| | अधमम् | अधमाव | अधमाम |
| अ० | अध्मासीत् | अध्मासिष्टाम् | अध्मासिषुः |
| | अध्मासीः | अध्मासिष्टम् | अध्मासिष्ट |
| | अध्मासिषम् | अध्मासिष्व | अध्मासिष्म |
| प० | दध्मौ | दध्मतुः | दध्मुः |
| | दध्माथ/दध्मिथ | दध्मथुः | दध्म |
| | दध्मौ | दध्मिव | दध्मिम |
| आ० | ध्मेयात् | ध्मेयास्ताम् | ध्मेयासुः |
| | ध्मेयाः | ध्मेयास्तम् | ध्मेयास्त |
| | ध्मेयासम् | ध्मेयास्व | ध्मेयास्म |
| | | तथा | |
| | ध्मायात् | ध्मायास्ताम् | ध्मायासुः |
| | ध्मायाः | ध्मायास्तम् | ध्मायास्त |
| | ध्मायासम् | ध्मायास्व | ध्मायास्म |
| श्व० | ध्माता | ध्मातारौ | ध्मातारः |
| | ध्मातासि | ध्मातास्थः | ध्मातास्थ |
| | ध्मातास्मि | ध्मातास्वः | ध्मातास्मः |
| भ० | ध्मास्यति | ध्मास्यतः | ध्मास्यन्ति |
| | ध्मास्यसि | ध्मास्यथः | ध्मास्यथ |
| | ध्मास्यामि | ध्मास्यावः | ध्मास्यामः |

| | | | |
|---|---|---|---|
| क्रि० | अध्मास्यत् | अध्मास्यताम् | अध्मास्यन् |
| | अध्मास्यः | अध्मास्यतम् | अध्मास्यत |
| | अध्मास्यम् | अध्मास्याव | अध्मास्याम |

### ५. ष्ठां (ष्ठा) गतिनिवृत्तौ।

| | | | |
|---|---|---|---|
| व० | तिष्ठति | तिष्ठतः | तिष्ठन्ति |
| | तिष्ठसि | तिष्ठथः | तिष्ठथ |
| | तिष्ठामि | तिष्ठावः | तिष्ठामः |
| स० | तिष्ठेत् | तिष्ठेताम् | तिष्ठेयुः |
| | तिष्ठेः | तिष्ठेतम् | तिष्ठेत |
| | तिष्ठेयम् | तिष्ठेव | तिष्ठेम |
| प० | तिष्ठतु/तिष्ठतात् | तिष्ठताम् | तिष्ठन्तु |
| | तिष्ठ/तिष्ठतात् | तिष्ठतम् | तिष्ठत |
| | तिष्ठानि | तिष्ठाव | तिष्ठाम |
| ह्य० | अतिष्ठत् | अतिष्ठताम् | अतिष्ठन् |
| | अतिष्ठः | अतिष्ठतम् | अतिष्ठत |
| | अतिष्ठम् | अतिष्ठाव | अतिष्ठाम |
| अ० | अध्यष्ठात् | अध्यष्ठाताम् | अध्यष्ठुः |
| | अध्यष्ठाः | अध्यष्ठातम् | अध्यष्ठात |
| | अध्यष्ठाम् | अध्यष्ठाव | अध्यष्ठाम |
| | | तथा | |
| | अस्थात् | अस्थाताम् | अस्थुः |
| | अस्थाः | अस्थातम् | अस्थात |
| | अस्थाम् | अस्थाव | अस्थाम |
| प० | अधितष्ठौ/तस्थौ | तस्थतुः | तस्थुः |
| | तस्थाथ/तस्थिथ | तस्थथुः | तस्थ |
| | तस्थौ | तस्थिव | तस्थिम |
| आ० | स्थेयात् | स्थेयास्ताम् | स्थेयासुः |
| | स्थेयाः | स्थेयास्तम् | स्थेयास्त |
| | स्थेयासम् | स्थेयास्व | स्थेयास्म |
| श्व० | स्थाता | स्थातारौ | स्थातारः |
| | स्थातासि | स्थातास्थः | स्थातास्थ |
| | स्थातास्मि | स्थातास्वः | स्थातास्मः |
| भ० | स्थास्यति | स्थास्यतः | स्थास्यन्ति |
| | स्थास्यसि | स्थास्यथः | स्थास्यथ |
| | स्थास्यामि | स्थास्यावः | स्थास्यामः |
| क्रि० | अस्थास्यत् | अस्थास्यताम् | अस्थास्यन् |
| | अस्थास्यः | अस्थास्यतम् | अस्थास्यत |
| | अस्थास्यम् | अस्थास्याव | अस्थास्याम |

### ६. म्नां (म्ना) अभ्यासे।

| | | | |
|---|---|---|---|
| व० | मनति | मनतः | मनन्ति |
| | मनसि | मनथः | मनथ |
| | मनामि | मनावः | मनामः |
| स० | मनेत् | मनेताम् | मनेयुः |
| | मनेः | मनेतम् | मनेत |
| | मनेयम् | मनेव | मनेम |
| प० | मनतु/मनतात् | मनताम् | मनन्तु |
| | मन/मनतात् | मनतम् | मनत |
| | मनानि | मनाव | मनाम |
| ह्य० | अमनत् | अमनताम् | अमनन् |
| | अमनः | अमनतम् | अमनत |
| | अमनतम् | अमनाव | अमनाम |
| अ० | अम्नासीत् | अम्नासिष्टाम् | अम्नासिषुः |
| | अम्नासीः | अम्नासिष्टम् | अम्नासिष्ट |
| | अम्नासिषम् | अम्नासिष्व | अम्नासिष्म |
| प० | मम्नौ | मम्नतुः | मम्नुः |
| | मम्नाथ/मम्निथ | मम्नथुः | मम्न |
| | मम्नौ | मम्निव | मम्निम |
| आ० | म्नेयात् | म्नेयास्ताम् | म्नेयासुः |
| | म्नेयाः | म्नेयास्तम् | म्नेयास्त |
| | म्नेयासम् | म्नेयास्व | म्नेयास्म |
| | | तथा | |
| | म्नायात् | म्नायास्ताम् | म्नायासुः |
| | म्नायाः | म्नायास्तम् | म्नायास्त |
| | म्नायासम् | म्नायास्व | म्नायास्म |
| श्व० | म्नाता | म्नातारौ | म्नातारः |
| | म्नातासि | म्नातास्थः | म्नातास्थ |
| | म्नातास्मि | म्नातास्वः | म्नातास्मः |

| | | | |
|---|---|---|---|
| भ० | म्नास्यति | म्नास्यतः | म्नास्यन्ति |
| | म्नास्यसि | म्नास्यथः | म्नास्यथ |
| | म्नास्यामि | म्नास्यावः | म्नास्यामः |
| क्रि० | अम्नास्यत् | अम्नास्यताम् | अम्नास्यन् |
| | अम्नास्यः | अम्नास्यतम् | अम्नास्यत |
| | अम्नास्यम् | अम्नास्याव | अम्नास्याम |

### ७. दां(दा) दाने।

| | | | |
|---|---|---|---|
| व० | यच्छति | यच्छतः | यच्छन्ति |
| | यच्छसि | यच्छथः | यच्छथ |
| | यच्छामि | यच्छावः | यच्छामः |
| स० | यच्छेत् | यच्छेताम् | यच्छेयुः |
| | यच्छेः | यच्छेतम् | यच्छेत |
| | यच्छेयम् | यच्छेव | यच्छेम |
| प० | यच्छतु/यच्छतात् | यच्छताम् | यच्छन्तु |
| | यच्छ/यच्छतात् | यच्छतम् | यच्छत |
| | यच्छानि | यच्छाव | यच्छाम |
| ह्य० | अयच्छत् | अयच्छताम् | अयच्छन् |
| | अयच्छः | अयच्छतम् | अयच्छत |
| | अयच्छम् | अयच्छाव | अयच्छाम |
| अ० | अदात् | अदाताम् | अदुः |
| | अदाः | अदातम् | अदात |
| | अदाम् | अदाव | अदाम |
| प० | ददौ | ददतुः | ददुः |
| | ददाथ/ददिथ | ददथुः | दद |
| | ददौ | ददिव | ददिम |
| आ० | देयात् | देयास्ताम् | देयासुः |
| | देयाः | देयास्तम् | देयास्त |
| | देयासम् | देयास्व | देयास्म |
| श्व० | दाता | दातारौ | दातारः |
| | दातासि | दातास्थः | दातास्थ |
| | दातास्मि | दातास्वः | दातास्मः |
| भ० | दास्यति | दास्यतः | दास्यन्ति |
| | दास्यसि | दास्यथः | दास्यथ |
| | दास्यामि | दास्यावः | दास्यामः |
| क्रि० | अदास्यत् | अदास्यताम् | अदास्यन् |
| | अदास्यः | अदास्यतम् | अदास्यत |
| | अदास्यम् | अदास्याव | अदास्याम |

### ८. जिं(जि) अभिभवे।

| | | | |
|---|---|---|---|
| व० | जयति | जयतः | जयन्ति |
| | जयसि | जयथः | जयथ |
| | जयामि | जयावः | जयामः |
| स० | जयेत् | जयेताम् | जयेयुः |
| | जयेः | जयेतम् | जयेत |
| | जयेयम् | जयेव | जयेम |
| प० | जयतु/जयतात् | जयताम् | जयन्तु |
| | जय/जयतात् | जयतम् | जयत |
| | जयानि | जयाव | जयाम |
| ह्य० | अजयत् | अजयताम् | अजयन् |
| | अजयः | अजयतम् | अजयत |
| | अजयम् | अजयाव | अजयाम |
| अ० | अजैषीत् | अजैष्टाम् | अजैषुः |
| | अजैषीः | अजैष्टम् | अजैष्ट |
| | अजैषम् | अजैष्व | अजैष्म |
| प० | जिगाय | जिग्यतुः | जिग्युः |
| | जिगयिथ/जिगेथ | जिग्यथुः | जिग्य |
| | जिगाय/जिगय | जिग्यिव | जिग्यिम |
| आ० | जीयात् | जीयास्ताम् | जीयासुः |
| | जीयाः | जीयास्तम् | जीयास्त |
| | जीयासम् | जीयास्व | जीयास्म |
| श्व० | जेता | जेतारौ | जेतारः |
| | जेतासि | जेतास्थः | जेतास्थ |
| | जेतास्मि | जेतास्वः | जेतास्मः |
| भ० | जेष्यति | जेष्यतः | जेष्यन्ति |
| | जेष्यसि | जेष्यथः | जेष्यथ |
| | जेष्यामि | जेष्यावः | जेष्यामः |

| | | | |
|---|---|---|---|
| क्रि० | अजेष्यत् | अजेष्यताम् | अजेष्यन् |
| | अजेष्य: | अजेष्यतम् | अजेष्यत |
| | अजेष्यम् | अजेष्याव | अजेष्याम |

**९. जिं(जि) अभिभवे।**

**(उपरिवत्)**

**१०. क्षिं(क्षि) क्षये।**

| | | | |
|---|---|---|---|
| व० | क्षयति | क्षयत: | क्षयन्ति |
| | क्षयसि | क्षयथ: | क्षयथ |
| | क्षयामि | क्षयाव: | क्षयाम: |
| स० | क्षयेत् | क्षयेताम् | क्षयेयु: |
| | क्षये: | क्षयेतम् | क्षयेत |
| | क्षयेयम् | क्षयेव | क्षयेम |
| प० | क्षयतु/क्षयतात् | क्षयताम् | क्षयन्तु |
| | क्षय/क्षयतात् | क्षयतम् | क्षयत |
| | क्षयाणि | क्षयाव | क्षयाम |
| ह्य० | अक्षयत् | अक्षयताम् | अक्षयन् |
| | अक्षय: | अक्षयतम् | अक्षयत |
| | अक्षयम् | अक्षयाव | अक्षयाम |
| अ० | अक्षैषीत् | अक्षैष्टाम् | अक्षैषु: |
| | अक्षैषी: | अक्षैष्टम् | अक्षैष्ट |
| | अक्षैषम् | अक्षैष्व | अक्षैष्म |
| प० | चिक्षाय | चिक्षियतु: | चिक्षियु: |
| | चिक्षयिथ/चिक्षेथ | चिक्षियथु: | चिक्षय |
| | चिक्षाय/चिक्षय | चिक्षियिव | चिक्षियिम |
| आ० | क्षीयात् | क्षीयास्ताम् | क्षीयासु: |
| | क्षीया: | क्षीयास्तम् | क्षीयास्त |
| | क्षीयासम् | क्षीयास्व | क्षीयास्म |
| श्व० | क्षेता | क्षेतारौ | क्षेतार: |
| | क्षेतासि | क्षेतास्थ: | क्षेतास्थ |
| | क्षेतास्मि | क्षेतास्व: | क्षेतास्म: |
| भ० | क्षेष्यति | क्षेष्यत: | क्षेष्यन्ति |
| | क्षेष्यसि | क्षेष्यथ: | क्षेष्यथ |
| | क्षेष्यामि | क्षेष्याव: | क्षेष्याम: |
| क्रि० | अक्षेष्यत् | अक्षेष्यताम् | अक्षेष्यन् |
| | अक्षेष्य: | अक्षेष्यतम् | अक्षेष्यत |
| | अक्षेष्यम् | अक्षेष्याव | अक्षेष्याम |

**११ इं (इ) गतौ।**

| | | | |
|---|---|---|---|
| व० | अयति | अयत: | अयन्ति |
| | अयसि | अयथ: | अयथ |
| | अयामि | अयाव: | अयाम: |
| स० | अयेत् | अयेताम् | अयेयु: |
| | अये: | अयेतम् | अयेत |
| | अयेयम् | अयेव | अयेम |
| प० | अयतु/अयतात् | अयताम् | अयन्तु |
| | अय/अयतात् | अयतम् | अयत |
| | अयानि | अयाव | अयाम |
| ह्य० | आयत् | आयताम् | आयन् |
| | आय: | आयतम् | आयत |
| | आयम् | आयाव | आयाम |
| अ० | ऐषीत् | ऐष्टाम् | ऐषु: |
| | ऐषी: | ऐष्टम् | ऐष्ट |
| | ऐषम | ऐष्व | ऐष्म |
| प० | इयाय | इयतु: | इयु: |
| | इययिथ/इयेथ | इयथु: | इय |
| | इयाय/इयय | इयिव | इयिम |
| आ० | ईयात् | ईयास्ताम् | ईयासु: |
| | ईया: | ईयास्तम् | ईयास्त |
| | ईयासम् | ईयास्व | ईयास्म |
| श्व० | एता | एतारौ | एतार: |
| | एतासि | एतास्थ: | एतास्थ |
| | एतास्मि | एतास्व: | एतास्म: |
| भ० | एष्यति | एष्यत: | एष्यन्ति |
| | एष्यसि | एष्यथ: | एष्यथ |
| | एष्यामि | एष्याव: | एष्याम: |

**।।अथ धातुप्रत्यानुबन्धफलप्रतिपादका:श्लोका:।।**

**उच्चारणेऽस्त्यवर्णाद्य आ: क्तयोरिण् निषेधने।**
**इकारादात्मनेपद-मीकाराच्चोभयं भवेत्।। १।।**
**उदित: स्वरान्नोन्तश्चो-त्तवादाविटो विकल्पनम्।**
**रूपान्त्ये डेयरेऽह्रस्व ऋकारादङ् विकल्पक:।।२।।**
**लृकारादङ् समायात्ये: सिचि वृद्धिनिषेधक:।**
**ऐ: क्तयोरिण्निषेध: स्या-दो: क्तयोस्तस्य नो भवेत्।। ३।।**
**औकार इड्विकल्पार्थेऽनुस्वारोऽनिड्विशेषणे।**
**लृकाराश्च विसर्गश्चा-नुबन्धो भवतो नहि।। ४।।**
**कोऽदादिर्न गुणी प्रोक्तो खे पूर्वस्य मुमागम:।**
**गे नोभयपदी प्रोक्तो घश्च चजो: कगौ कृतौ।।५।।**
**आत्मने गुणरोधे ङ्-श्चो दिवादिगणो भवेत्।**
**ञो वृद्धौ वर्तमाने क्त: ट: स्वादिष्ठ्युकारक:।।६।।**
**त्रिमगर्थो डकार: स्याण् णश्चुरादिश्च वृद्धिकृत्।**
**तस्तुदादौ नकारश्चेच्चापुंसीति विशेषणे।।७।।**
**रुधादौ नागमे पोहि मो दाम: सम्प्रदानके।**
**यस्तनादौ रकार: स्यात् पुंवद्भावार्थसूचक:।।८।।**
**स्त्रीलिङ्गार्थे लकारो हि उत और्विति वो भवेत्।**
**श: क्र्यादि: क्य: शिति प्रोक्त: ष: षितोङ् विशेषणे।।९।**
**पदत्वार्थे सकारो हि नोक्ता अत्र न सन्ति च।**
**धातूनां प्रत्ययानाञ्चानुबन्ध: कथितो मया।।१०।।**

उच्चारणम् उच्चारणार्थं श्रुतिसुखदोच्चारणार्थमिति यावत्। अवर्णाद्य: अवर्णस्तु अकार आकारश्च वर्णग्रहणे स्वसंज्ञकस्यापि ग्रहणमिति न्यायात्। तत्राकारव्यवच्छेदार्थमाह-अवर्णस्य अकाराकाररूपस्याद्य: प्रथम अकार इत्यर्थ:। अस्ति। अकार: श्रुतिसुखदोच्चारणार्थं धात्वादौ अनुबन्धतया योज्यत इत्यर्थ:। यथा ५१ तक (तक्) हसने। एवम् आ आकार: क्तयो: क्तक्तवतु प्रत्यययोरादौ इण्निषेण्ने इकारनिषेधार्थ:। यथा १२५ हुर्छा (हुर्छ्) कौटिल्ये। अत्रादित्त्वात् आदित इति क्तयोरिडभावे हूर्ण हूर्णवान्। इकाराद् आत्मनेपदं भवति। यथा ६१८ ककि (कक्) लौल्ये। अत्र इडित्त इत्यात्मनेपदे ककते। च: समुच्चये। ईकाराद् उभयमुभयपदं भवति। ८९५ भजीं (भज्) सेवायाम्। अत्र ईदित्त्वात्फलवात्कर्तरि ईगित इत्यात्मनेपदम्। अफलवति तु शेषात्परस्मै इति परस्मैपदमेवोभयपदं भवति। चो-उश्च ऊश्चानयो: समाहार इति ऊ: तत: क्लीबे इति ह्रस्वत्वे उ इति तत: च-उ-इति अकारस्य उकारस्य च सन्धौ चो इति जातम्। तथा च चोशब्देन च उ: ऊ: इति ज्ञेयम्। तत्र चकार: समुच्चये। उ: उकार उदित: स्वरान्नोऽन्त इत्यत्र विशेषणार्थ: ऊ: ऊकार: क्त्वादौ क्त्वाप्रत्ययस्य आदौ इड इकारस्य विकल्पनं करोतीति शेष:। अथवा-उ-उदित: स्वरान्नोऽन्त: च-ऊ: इति ऊदितस्वरान्नोऽन्त: च-ऊ: इति ऊदितस्वरान्नोऽन्तश्चो: इति पाठो ज्ञेय:। तत्र प्रथमो य उशब्दस्तेन उरुपमक्षरमिति नपुंसकलिङ्गार्थं व्याख्येयम्। यथा ५२ तकु (तक्-तनक्-तङ्क्) कृच्छ्रजीवने। अत्र उदित्त्वाद् उदित: स्वरान्नोऽन्त इति नागम:। १०६ वञ्चू (वञ्च्) गतौ। ऊदितो वा इति वेट्। वक्त्वा। इति तु ऋतृषेति क्त्वो वा कित्त्वे वचित्वा वञ्चित्वा ऋ उपान्त्ये इत्यवस्थायां सन्धौ रुपान्त्ये। डे परे डप्रत्यये परे डपरणौ प्रत्यये इति यावत् अह्रस्वो ह्रस्वाभाव:। डपरकणिप्रत्यये परे सति ऋदितां धातूनामुपान्त्यस्य ह्रस्वो न भवति। यथा ५५ ओखृ (ओख्) शोषणालमर्थयो:। अत्र ऋदित्त्वाद् डपरे णौ उपान्त्यस्येति न ह्रस्व:। मा भवानोचिखत्। ऋदित्त्वादेव चौतो नेत्संज्ञा प्रयोगित्वाच्च्। एवं ५६ राखृ (राख्) शोषणालमर्थयो:। अरराखत्। ऋकाराद् अङ: विकल्प एव विकल्पक:। २८० च्युतृ (च्युत्) आसेचने। ऋदित्त्वाद् ऋदिच्छ्वीति वाङि अच्युतत् अच्योतीत्। लृकाराद् अङ् समायाति ३९६ गम्लृं (गम्) गतौ। लृदित्त्वाद् लृदिद्द्युतादित्यङि अगमत्। ए: एकार: सिचि वृद्धिनिषेधक:। १७४ कटे (कट्) वर्षावरणयो:। अत्र व्यञ्जनादेर्वोपान्त्यस्येति। वृद्धेरेदित्त्वान्न श्विजाग्रिति प्रतिषेधे अकटीत्। ऐ: ऐकारो यदि भवेत्तर्हि क्तयो: क्तक्तवतुप्रत्यययोरादौ इण्निषेणे भवति। २०० कटै (कट्) गतौ। अत्रैदित्त्वात् डीयश्वैदित: क्तयोरिति क्तयोर्नेट् कट्ट: कट्टवान्। ओ: ओकारो यदि स्यात्तर्हि क्तयो: क्तक्तवतुप्रत्यययोस्तकारस्य नो नकारो भवेत्। ४८ ओवैं (वै) शोषणे। अत्र ओदित्त्वात् सूयत्यादीति क्तयोस्तस्य नत्वे वान: वानवान्। २१ औस्वृ (स्वृ) शब्दोपतापयो:। अत्रौदित्त्वाद् धूगौदित इति वेट्। स्वर्ता स्वरिता सुस्वूर्षति सिस्वरिषति। अनुस्वार: बिन्दुरूपोऽनिड्विशेषणे अनिट्त्वार्थ इत्यर्थ:।

२ पां (पा) पाने। अत्रानुस्वारेत्त्वात् स्ताद्यशित इति प्राप्तस्येट: एकस्वरादनुस्वारेत इति निषेध:। पाता पास्यति। लृकारो विसर्गश्चानुबन्धो न भवत:। ककारो यदि धातौ स्यात्तदा धातु:

अदादिर्भवति। एवं ककारो यदि प्रत्यये स्यात्तदा तस्मिन् प्रत्यये परे धातुर्गुणी गुणवान् न भवति। ११०० हनंक् (हन्) हिंसागत्योः। कित्करणाददादित्वं तेन कर्तर्यनद्भ्यः शव् इत्यत्र अदादिवर्जनाच्छवभावे हन्ति। भूसत्तायाम्। भू-क्यात्-भूयात् अत्र कित्त्वेन नामिनो गुणोऽक्ङितीत्यत्र क्ङिद्वर्जनान्न गुणः खे पूर्वस्य-मुमागम इति मुम्-इति (म्) इत्यस्य प्राचां संज्ञा तयाइङ्व्यवहारः प्राचां-संज्ञाया व्यवहार इत्यत्र प्रमाणम्-यजादेः संप्रसारणमिति एवञ्च मुमागम इत्यस्य मागम इत्यर्थः। खे खिति पूर्वस्य म् आगमो भवति १२० मनिंच् (मन्) ज्ञाने कर्तुः खश् इति खशि खित्यनव्ययेति मागमे च पटुमात्मानं मन्यत इति पटुंमन्यः।। ८८३ श्रिग् (श्रि) सेवायाम्। गित्त्वात्फलवति कर्तरि ईगित इत्यात्मनेपदेऽन्यत्र-शेषात्परस्मायिति परस्मैपदे चोभयपदं ज्ञेयम्। श्रयते श्रयति। घो घकारो यदि स्यात्तदा चजोः चकारजकारयोः कगौ क्रमेण ककारगकारौ कृतौ विहितौ ज्ञातव्यौ। भाविनि भूतोपचाराद् घकारे। इति चकारस्य ककारो जकारस्य गकारो भवतीत्यर्थः। ८९२ डुपचींष् (पच्) पाके। पचनं (पच्-घञ्) पाकः। ९९१ यजीं (यज्) देवपूजासंगतिकरणदानेषु। यजनं (यज्-घञ्) यागः। अत्र चजः कगमिति चकारस्य कत्वं जकारस्य गत्वञ्च। आत्मने इति पदैकदेशे पदसमुदायोपचाराद् आत्मनेपदे आत्मनेपदार्थं गुणरोधे गुणनिषेणार्थञ्च ङो डकारो भवति। ५६८ गांङ् (गा) गतौ ङित्त्वाद् इङित इत्यात्मनेपदे गाते। ९३७ द्युति (द्युत्) दीप्तौ। द्युत्-अङ् अद्युतत् अत्र ङित्वेन-नामिन इत्यत्र ङिद्वर्जनान्न गुणः। चः चकारो यदि स्यात्तदा दिवागणो भवेत्। दिवादिगणीयो धातुर्भवेदित्यर्थः। ११५३ कुथच् (कुथ्) पूतिभावे। अत्र चित्त्वाद्दिवादित्वेन दिवादेरिति श्ये कुथ्यति। ञो ञकारो वृद्धौ वृद्ध्यर्थः।।

एवं ञो नाम ञकारोपलक्षितो ञिर्यदि भवेत्तदाः धातोर्वर्तमाने क्तप्रत्यो भवति। १ भू सत्तायाम्। अनु-अ-भू-ञिच् अन्वभावि-अत्र ञित्त्वाद् ञ्णितीति वृद्धिः। ३०० ञिक्ष्विदा (क्ष्विद्) अव्यक्ते शब्दे। ञित्त्वाज्ज्ञानेच्छार्चेति सत्यर्थे क्तः। क्ष्विद्यते क्ष्विण्णः। टकारो यदि स्यात्तदा स्वादिः स्यात्। १२८६ षिगट् (सि) अभिषवे। अत्र टित्त्वेन स्वादित्वात् स्वादेः श्नुरिति श्नौ सिनुते (टःस्वादिष्ठ्द्युकारकः) अत्र ठ्द्यकारकः इति पाठो न समीचीनः ठानुबन्धानुपलम्भात् ठ-इत्यस्य निर्विभक्तिकत्वात् अयोग्यतया समासाभावात् द्युकारक इत्यत्र द्युरूपकार्यानुपलभ्भाच्च अतः टःस्वादिरथुकारकः इति पाठः सम्यक् टकारः स्वादिः (षिंगट्-सिनुते इति उकारविशिष्टः-टकारः अथुकारकः यथा टुवपीं बीजसन्ताने इति 'द्वितोऽथुः' इति अथौ वपथुरिति। त्रिमगर्थो डकार इत्यग्रिमग्रन्थानुरोधेन-उकारविशिष्ट इति अवश्याध्याहार्यम्-इति तस्मिन् पाठे न कोऽपि दोष इति-त्रिमग् अर्थः प्रयोजनं यस्य तादृशो डकारः स्यात् अत्र डकारेण डकारोपलक्षितो 'डुंकारो ज्ञेयः। ८९२ डुपचींष् (पच्) पाके। ड्वित्त्वात्रिमकि पाकेन निर्वृत्तं पक्त्रिमम्। णो णकारो यदि स्यात्तदा चुरादिः धातुश्चुरादिगणीयो भवति एवं णकारो वृद्धिकृद्। अस्ति १५७२ बल्कण् (बल्क्) भाषणे। णित्वाच्चुरादित्वेन चुरादिभ्य इति णिचि बल्कयति। १२ दु (दु) गतौ णवि वृद्धौ दुदाव। १३१७ क्षिपींत् (क्षिप्) प्रेरणे। तित्त्वात् तुदादेः श इति क्षिपति। नकारश्च इच्चापुंसोऽनित्क्याप्परे इत्यत्र विशेषणार्थः। खट्विका खट्वाका् अनिदिति किम्। दुर्गका पकारो रुधादौ नागमार्थः। अर्थात् पकारेण रुधादित्वं भवति रुधादित्वाच्च नागमो भवति। १४७३ रिचृंपी (रिच्) विरेचने रुधां स्वरादिति श्ने रिणक्ति किन्तु रुधादौ तागमे पोहि-इति पाठः सम्यक्- तस्येयं व्याख्या पकारो रुधादिघटकाः पकारानुबन्धेन धातूनां रुधादित्वं भवतीति भावः प्रत्ययस्थपकारानुबन्धः तागमप्रयोजकः-(दृवृग्-इत्यादिना क्यपि 'ह्रस्वस्य तः पित्कृति' तागमे आदृत्य प्रावृत्य इति मो मकारः दामः सम्प्रदाने ऽधर्म्ये आत्मने च इत्यत्र विशेषणार्थः। दास्या सम्प्रयच्छते कामुकः। यो यकारः तनादेः सूचकः। १५०१ क्षणूयी (क्षण्) हिंसायाम्। यित्त्वात् कृग्तनादेरित्यौ च तनुते। रकारः पुंवद्भावरूपो योऽर्थस्तत्सूचकः। पट्वी प्रकारोऽस्याः पटुजातीया। प्रकारे जातीयरिति जातीयरि प्रत्यये रितीति पुंवद्भावः। लकारो स्त्रीलिङ्गार्थः। जनानां समूहो जनता; अत्र तल्प्रत्ययस्य लित्त्वात् स्त्रीत्वम्। वकार उत और्वितिव्यञ्जनेऽद्वेरित्यत्र विशेषणार्थः। १०७७ द्युंक् (द्यु) अभिगमने। द्यौति। शकारो यदि स्यात्तदा त्क्र्यादिः स्यात्। १५०७ षिंगूश् (सि) बन्धने। शित्त्वात्क्र्यादित्वेन क्र्यादेरिति श्नाप्रत्यये सिनाति। क्यःशितीत्यत्र विशेषणार्थः। भूयते अत्र भावकर्मविहिते शिति क्यः। चकारःषितोऽङ् इत्यत्र विशेषणार्थः। ८९२ डुपचींष् (पच्) पाके। पच्यतेऽसाविति पचा। सकारः पदत्वार्थे पदत्वप्रयोजकः। भवतोरिकणीयसौ इतीयसि भामसिद्यव्यञ्जने-इति पदत्वे घुटस्तृतीय इति दत्वे

भवदीय इति येऽनुबन्धतया नोक्तास्तेऽनुबन्धा न सन्ति। अनुबन्धास्तु इयन्त एव। अपि तु अत्रानुबन्धानां यद्यत्फलमुक्तं तेन प्रयोजनान्तराण्यप्युपलक्ष्यन्ते। यथा टकारस्य प्रयोजन स्वादित्वमेवोक्तं तथापि २८ ट्धें (धे) पाने। अत्र टकारः शुनिंधयीत्यादौ ङ्यर्थः।

एवं डकारस्यान्त्यस्वरलोपप्रभृतिप्रयोजनं स्वयमूह्यम्।

अत्रार्थेऽन्येऽपि कतिचित् श्लोकाः

**अदादयः कानुबन्धाश्चानुबन्धा दिवादयः।**
**स्वादयष्टानुबन्धांस्तानुबन्धास्तुदादयः॥१॥**
**रुधादयः पानुबन्धा यानुबन्धास्तनादयः।**
**क्र्यादयः शानुबन्धा णानुबन्धाश्चुरादयः॥२॥**

**॥इत्यनुबन्धफलप्रतिपादकप्रकरणतम्॥**

**॥वृत्गणफलनिरुपणम्॥**

**द्युतादेरद्यतन्यां चाङात्मनेपदमिष्यते**
**वृदादिपञ्चकेभ्यो वा स्यसनोरात्मनेपदम्॥१॥**
**ज्वलादेर्णो विकल्पेन यजादेः संप्रसारणम्।**
**घटादीनां भवेद्ह्रस्वो णौ परेऽजीघटत् सदा॥२॥**
**अद्यतन्यां पुषादित्वादङ् परस्मैपदे भवेत्।**
**स्वादित्वाच्च क्तयोस्तस्य न कारः प्रकटो भवेत्॥३॥**
**प्वादीनां भवेद्ह्रस्वो ल्वादेस्क्तयोश्च नो भवेत्।**
**युजादयो विकल्पेन ज्ञेयाश्चुरादिके गणे॥४॥**
**मुचादेर्नागमः शे च कुटादित्वात्सिचि परे।**
**गुणवृद्धेरभावश्च कथितो हेमसूरिणा॥५॥**
**अदन्तानां गुणो वृद्धिर्यङ् चुरादेश्च नो भवेत्।**
**संक्षेपेण फलञ्चैतज्ज्ञेयं सूत्रानुसारतः॥६॥**

वृत् गणानामान्तर्गणास्तेषामान्तर्गणकरणे यत्फलं तदुच्यते। द्युतोदेर्द्युतादिगणपठितधातोरद्यतन्यामङ् आत्मनेपदञ्च वा भवति। अर्थात्-द्युतादिगणस्य फलमद्यतन्यां विकल्पेनाङात्मने-पदभवनम्। ९३७ द्युति (द्युत्) दीप्तौ। द्युद्भ्योऽद्यतन्यामि-त्यात्मनेपदिनोऽपि विकल्पनात्पक्षे शेषात्परस्मायिति परस्मैपदे लृदिद्द्युतादीत्यङि अद्युतत्। पक्षे अद्योतिष्ट वृदादिपञ्चकेभ्यो वृदादेः पञ्चतः स्यसनोः स्यादौ प्रत्यये सनि च विषये आत्मनेपदं त्रा भवति। अयं वृदादिर्द्युताद्यन्तर्गणस्तेन द्युतादिफलन्तु अत्येव तदतिरिक्तमिदं ज्ञेयम्। ९५५ वृतूङ् (वृत्) वर्त्तने। अवृतत् अवर्तिष्ट। वद्भ्य इति स्यसनोर्विषये वात्मनेपदमात्मनेपदाभावे च न वृद्द्भ्य इति नेट्। वर्तिष्यते वर्त्स्यति अवर्तिष्यत अवर्त्स्यत् सनि विवृत्सति विवर्तिषते। ज्वलादेर्णः प्रत्ययो विकल्पेन भवति। ९६० ज्वल (ज्वल) दीप्तौ। वा ज्वलादीति णे ज्वालः। पक्षे ज्वलः। यजादेर्यजादिगणस्य फलं सम्प्रसारणं य्वृत। ९९१ यजीं (यज्) देवपूजासङ्गतिकरणदानेषु। यजादिवशिति पूर्वस्य य्वृति इयाज यजादिवचेरिति य्वृति ईजे। घटादीनां फलं तु णौ णिप्रत्यये परे ह्रस्वः। १००० घटिष् (घट्) चेष्टायाम्। घटादेरितिह्रस्वे। घटयति। (णौ परेऽजीघटत् सदा) अयं भावः 'जासनाटक्राथपिषो हिंसायां इत्यत्र क्राथेत्याकारोपान्त्यनिर्देशा-दाकारश्रुतावस्य प्रवृत्तेः चौरस्योत्क्राथयतीति घटादेर्ह्रस्व इति ह्रस्वत्वाभावः। अद्यतन्यां तु ह्रस्वघटितमेव रूपं भवति इति अजीघटत्सदेत्यनेन सूचितमिति क्राथेरपि उदचिक्रथादिति 'उपान्त्यस्य' इति ह्रस्वस्तु न निषिध्यते यस्मिन् प्राप्त एवेति न्यायादिति। पुषादित्वादद्यतन्यां परस्मैपदेऽङ् भवति। दिवाद्यन्तर्गणपुषादिगणस्य फलं परस्मैपदेऽद्यतन्यामङ् प्रत्ययभवनमित्यर्थः। ११७५ पुषंच् (पुष्) पुष्टौ। लदिदिति अङि अपुषत्।स्वादित्वात् दिवाद्यन्तर्गणस्वादिगणपठितत्वात् क्तयोस्क्तक्तवतुप्रत्यययो-स्तकारस्य नकारो भवति। १२४१ षूङौच् (सू) प्राणिप्रसवे। सूयत्यादीति क्तयोस्तस्य नत्वे सूनः सूनवान्। प्वादीनां क्र्याद्यन्तर्गणप्वादिगणपठितधातूनां ह्रस्वो गदितः। १५१८ पूग्शू (पू) पवने। प्वादेरिति ह्रस्वे पुनाति पुनीते। ल्वादेः क्र्याद्यन्तर्गणप्वान्तर्गणल्वादिगणपठितधातोस्क्तयोस्तस्य नो भवेत्। १५१९ लूग्श् (लू) छेदने। ऋल्वादेरिति क्तक्तीनां तो नत्वे लूनः लूनवान् लूतिः। युजादयो युजादिगणपठिता धातवश्चुरादिगणे विकल्पेन ज्ञेयाः। चुराद्यन्तगणयुजादिगणस्य फलं विकल्पेन णिच्ग्रहणमित्यर्थः। १९४२ युजण् (युज्) सम्पर्चने। युजादेरिति वा णिचि योजयति। पक्षे न्यायविकरणः शव् योजति। मुचादेस्तुदाद्यन्तर्गणमुचादिगणस्य फलं शे शप्रत्यये नागमः। १३२० मुच्लृन्ती (मुच्) मोक्षणे मुचादीति स्वरात्परे नेन्ते मुञ्चति मुञ्चते। कुटादित्वात् तुदाद्यन्तर्गणकुटादिगणपठितत्वात् सिचि परे गुणवृद्ध्यभावः। यथा १४२६ कुटत् (कुट्) कौटिल्ये। कटादेरिति ङित्त्वात् गुणाभावे सिचि अकुटीत्। १४२९ णूत् (णूत्) स्तवने।

कुटादेरिति ङित्वात् सिचि परस्मायिति वृद्ध्यभावे अनुवीत्। चुरादेरदन्तानां चुरादिगणपठितादन्तधातूनामित्यर्थः। गुणो वृद्धिश्च न भवेत्। सुखण् (सुख्) तत्क्रियायाम्। १८५४ रचण् (रच्) प्रतियत्ने। रचयति। अत्रात इत्यल्लुकः स्वरादेशत्वेन स्थानिवत्त्वाद् गुणवृद्ध्यभावः। अररचत्। असुसुखत्। अत्र समानलोपित्वादसमानलोप इति पूर्वस्य सन्वद्भावो लघोर्दीर्घ इति दीर्घश्च न भवति। १८५५ सूचण् (सूच्) पैशून्ये अत्रोपान्त्यह्रस्वाभावः।।

**।।इति वृत्गणफलनिरूपणम्।।**

**।।सकर्मकवाकर्मकत्वानिरूपणम्।।**

**फलव्यापारयोरेकनिष्ठतायामकर्मकः।**
**धातुस्तयोर्धर्मिभेदे सकर्मक उदाहृतः।।१।।**

फलस्य गतिनिवृत्त्यादिरूपस्य व्यापारस्य गतिनिवृत्त्यनुकूल-व्यापारादिरूपस्य च एकनिष्ठतायामेकाधिकरणवृत्तितायां सत्यां धातुरकर्मको भवति। फलसमानाधिकरणव्यापारबोधकत्वं समानाधिकरणफलावच्छिन्नव्यापारबोधकत्वं वाकर्मकत्वमिति फलितोऽर्थः। यथा पष्ठां (स्था) गतिनिवृत्तौ, अत्र फलं गतिनिवृत्तिः व्यापारस्तदनुकूल इति फलं व्यापारश्चोभयं देवदेत्तस्तिष्ठति इत्यत्र देवदत्तरूपैकाधिकरणे वर्त्तते। देवदत्तस्तिष्ठतीति कोऽर्थः? गतिनिवृत्त्यनुकूलव्यापारवान् देवदत्तः। एवं तयोः फलव्यापारयोः धर्मिभेदेऽधिकरणभेदे भिन्नभिन्नाधिकरणवृत्तितायां सत्यां धातुः सकर्मको भवति। फलव्यधिकरणव्यापारबोधकत्वं व्यधिकरणफलावच्छिन्न-व्यापार बोधकत्वं वा सकर्मकत्वमिति फलितोऽर्थः। यथा ८९२ डुपचींष् (पच्) पाके। देवदत्तस्तण्डुलान् पचति। कोऽर्थः? तण्डुलनिष्ठविक्लृत्यनुकूलव्यापारवान् देवदत्तः। अत्र फलं विक्लृतिः, सा तण्डुलेषु वर्त्तते व्यापारस्तदनुकूलः स देवदत्ते वर्त्तते इति फलव्यापारयोर्भिन्नाधिकरता।

अर्थान्तरे वर्त्तमानस्याकर्मकस्यापि सकर्मकत्वं भवति कालाध्वभावदेशापेक्षया च सर्व एव धातवः सकर्मकाः। मासमास्ते। क्रोशो गुडधानाभिर्भूयते। गोदो-स्वपिति। कुरून् शेते। अर्थान्तरवृत्त्यादिना च सकर्मकस्यापि अकर्मकत्वं भवति। यदाह-

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात्।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।।२।।**

अर्थान्तरे वर्त्तमानाद्धातोः सकर्मकस्यापि अकर्मिका क्रिया भवति। यथा भारं वहति उद्यच्छतीत्यर्थः नदी वहती स्रवतीत्यर्थः। कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम्। यथा ४६५ जीव (जीव्) प्राणधारणे जीवति। ७२८ हदिं (हद्) पुरीषोत्सर्गे हदते। अत्र प्राणपुरीषाख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते। कर्मणः प्रसिद्धत्वात्। यथा ५२७ वृषू (वृष्) सेचने। देवो वर्षति। न पुनरत्र रक्तं वर्षति। पार्थः शरान् वर्षति। कर्मणोऽविवक्षितत्वात्। यथा नेह पच्यते नेह भुज्यते। कर्माविवक्षा चौदासीन्थनिवृत्तिमात्रपरतया प्रयोगात्। यथा किं करोतीति प्रश्ने पचति पठतीत्यादि प्रत्यवस्थानं नतु भवति विद्यते वेत्यादि तेषामपर्यनुयोज्यत्वात्। यत्तु किं करोतीति प्रश्ने भवतीत्युत्तरं तत्क्रियाख्यकर्मनिबन्धनं नतु बाह्यकर्मापेक्षं भवनं करोतीत्यर्थावगमात्। क्रिया हि सर्वधातूनामान्तरं कर्म। अतएव क्रियाविशेषणानां कर्मत्वं स्मरन्ति। नन्वेवं क्रियाविशेषणादिति योगो व्यर्थः कर्मणीत्येव द्वितीयासिद्धेः। नैवम्। आन्तरकर्मणा सकर्मणोऽपि अकर्मककार्यप्रतिपत्त्यर्थत्वाद्योगस्य। तेन सुखं सुप्त इत्यादौ कर्त्तरि क्तः सिद्धः। सुखं स्थातेत्यादौ कृत्रिमित्ता षष्ठी न भवतीति। अत एव सकर्मकाकर्मकव्यवहारो द्रव्यकर्मनिमित्त इत्युच्यते। यदाह-

**।।सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम्।।**

**।।अथ द्विकर्मकगणनानिरूपणतम्।।**

**नीहवहिकृषो ण्यन्ता दुहिब्रूपृच्छिभिक्षिचिरुधिशास्वर्थाः।**
**पचियाचिदण्डिकृग्रहमथिजिप्रमुखा द्विकर्माणः।।१।।**

इमे सर्वे धातवो द्विकर्मका विज्ञेयाः। ८८४ णींग् (नी) प्रापणे। गामममजां नयति। ८८५ हृंग् (हृ) वरणे। निवासं हरति घासं। ९९६ वहीं (वह्) प्रापणे। ग्रामं भारं वहति। ५०६ कृषं (कृष्) विलेखने। १३१९ कृषींत् (कृष्) विलेखने। ग्रामं बलिवर्दं कर्षाति। ण्यन्ता इति। ३ घ्रां (घ्रा) गन्धोपादाने। जिनदासं पुष्पाणि घ्रापयति। दुहिब्रूपृच्छिभिक्षिचिरुचिशासूधातूनामर्था इव अर्था येषां ते तथा। दुहिप्रभृतीनां षण्णां धातूनां येऽर्थाः प्रतिपादिताः तादृशा अर्था येषां धातूनां भवन्ति तेऽपि धतवो द्विकर्मका विज्ञेयाः। ११२७ दुहींक् (दुह्) क्षरणे। गां दोग्धि पयः। ११२५ ब्रूंग्क् (ब्रू) व्यक्तायां वाचि। भव्यान् धर्मं ब्रूते। १३४७ प्रच्छंत् (प्रच्छ्) ज्ञीप्सायाम्। जनं मार्गं पृच्छति। ८८० भिक्षि (भिक्ष्) याञ्चायाम्। भिक्षते गां राजानम्। १२९० चिंग्ट् (चि) चयने। वृक्षं पुष्पाणि अवचिनोति। १४७३ रुधृंपी (रुध्)

आवरणे। शंठ गृहमवरुणद्धि १०९५ शासूक। (शास्) अनुशिष्टौ। मनुष्यं धर्मं शास्ति। ८९२ डुपचीँष् (पच्) पाके तण्डुलानोदनं पचति। याचिरत्रानुनयार्थस्तेन भिक्ष्यर्थाद्भेदः। ८९१ डुयाचृग् (याच्) याञ्चायाम्। शठं धर्मं याचतेऽनुनयतीत्यर्थः। १८६९ दण्डण् (दण्ड्) दण्डनिपाते। देवदत्तं शतं दण्डयति। ८८८ डुकृंग् (कृ) करणे। मृदं घटं करोति। १५१७ ग्रहीश् (ग्रह्) उपादाने। द्रव्यं धान्यं प्रतिगृण्हाति। १५४७ मन्थश् (मन्थ्) विलोडने। समुद्रममृतमम्नात्। ८ जिं (जि) अभिभवे। देवदत्तं शतं जयति। प्रमुखग्रहणात् १५६३ मुषश् (मुष्) स्तेये। गोविन्दं शतं मुष्णाति। एतद्व्याख्या तु मतान्तरीयोक्तकारिकानुसारेण कृता। हेमचन्द्रसूरीशानैस्तु। तच्च (द्विविधं कर्म तु) द्विकर्मकेषु दुहिभिक्षिरुधिप्रच्छिचिग्शास्वब्रूर्थेषु याचि जयतिप्रभृतिषु नीहकृषवहेषु च भवति। अत्रोदाहरणानि तु निरुक्तान्येव। अत्रोक्तातिरिक्तधातूणामुपरि गणना कृता। सा अत्रैव समवसरति। इदं तस्या उपलक्षणं मतभेदो वेति स्वयमूह्यम्।

**।।इति द्विकर्मकगणनानिरूपणम्।।**

**।।अथ गौणमुख्यकर्मनिरूपणम्।।**

**न्यादीनां कर्मणो मुख्यं प्रत्ययो वक्ति कर्मजः।**
**नीयते गौर्द्विजैर्ग्रामं भारो ग्राममथोह्यते।।१।।**
**गौणं कर्म दुहादीनां प्रत्ययो वक्ति कर्मजः।**
**गौः पयो दुह्यतेऽनेन शिष्योऽर्थं गुरुणोच्यते।।२।।**

कर्म द्विविधं मुख्यं गौणञ्च। तत्र यदर्थं क्रिया आरभ्यते तत्प्रधानम्। तत्सिद्ध्यै यत्क्रियया व्याप्यते गवादि तदप्रधानम्। अन्यत्सर्वं स्फुटम्। किञ्च गत्यर्थानामकर्मकाणां तु णिगन्तानां प्रधाने एष कर्मणि गम्यते मैत्रो ग्रामम्। आस्यते मासं मैत्रः। बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र बोध्यते शिष्यो धर्मम्। बोध्यते शिष्यं धर्मो वा। भोज्यतेऽतिथिमोदनः। भोज्यतेऽतिथिरोदनम्। पाठ्यते शिष्यो ग्रन्थतम्। पाठ्यते शिष्यं ग्रन्थो वा।

**।।इति गौणुख्यकर्मनिरूपणम्।।**

**।।अथ धातूपसर्गजन्यभेदप्रकाशनिरूपणम्।।**

**बीजकालेषु सम्बद्धा यथा लाक्षारसादयः।**
**वर्णादिपरिणामेन फलानामुपकुर्वते।।१।।**
**बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाश्यते।।२।।**

व्याख्या अथ किं धातुः पूर्वमुपसर्गेण युज्यते उत साधनेनेति! साधनं हि क्रियां निवर्त्तयति (साध्यत्ववैशिष्ट्येन बोधयतीति तामुपसर्गो विशिनष्टि (स्वद्योत्यविशेषणवैशिष्ट्येन बोधयतीत्यर्थः) अतः पूर्वं साधनेन साधनं कारकम् तदभिधायि कार्येण युज्यत इति तदयुक्तम् पूर्वं हि धातोः साधनेन सम्बन्धे आस्यते गुरुणा इत्यकर्मकः उपास्यते गुरुरिति सकर्मकः केन स्यात्।

यस्माद्विशिष्टैव क्रिया साधनेन साध्यते नतु साधनाल्लब्धस्वरूपान्यतो विशेषं लभते तस्मात् पूर्वमुपसर्गेण युज्यते-इति युक्तम्। न च प्रत्ययसम्बन्धमन्तरेण क्रियाविशेषस्यानभिव्यक्तेर्न धातोः पूर्वमुपसर्गेण सम्बन्धो युज्यते इति वाच्यम्? यतः-

**बीजकालेषु सम्बद्धा यथा लाक्षारसादयः।**
**वर्णादिपरिणामेन फलानामुपकुर्वते।। १।।**

बीजकालेषु-बीजोत्पत्तिसमयेषु सम्बद्धाः सम्पृक्ताः (बीजैरिति शेषः) लाक्षारसादयः-जतुरसप्रभृतयः फलानां वर्णादिपरिणामेन रूपरसादिपरिणमनद्वारा यथा उपकुर्वते।

**(बुद्धिस्थादभिसम्बन्धात्तथा धातूपसर्गयोः।।**
**अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते।।१।। )**

तथा धातूपसर्गयोः बुद्धिस्थाद् (बुद्धिविषयीकृतात्) अभिसम्बन्धात् भेदः (उपसर्गार्थकृतो विशेषः) अभ्यन्तरीकृतः (बुद्धिस्थीकृतः धातुनेति शेषः पदकाले उपसर्गसंज्ञकशब्दप्रयोगकाले प्रकाशते श्रोतुरिति शेषः।इति अङ्कुरोत्पत्तिसमये लाक्षारसादिसेकेन फलानां रूपरसादिवैलक्षण्यं भवति इति लोकप्रसिद्धिः तत्र यथा लाक्षारसादीनां पूर्वकालिकसम्बन्धेन जायमाना विलक्षणता फलकाले प्रकाशते तथा पूर्वकालिकोपसर्गसम्बन्धेन जायमानः उपसर्गार्थकृतौ विशेषः उपसर्गप्रयोगकाले प्रकाशते-एवं च पूर्वमुपसर्गयोगो नाम तदर्थसम्बन्धः तत उपसर्गशब्दात् पूर्वं

साधनकार्ययोग: तत उपसर्गसंज्ञकशब्दप्रयोग इति तात्पर्यम् इत्यलम्।

**।।अथ षोपदेशनिरूपणतम्।।**

**स्वरदन्त्यपरसकारादय: स्मिस्विदिस्वदिस्वञ्जिस्वपयश्च।**

**षोपदेशा: सृपि सृजि स्त्या स्तृ स्तृ सृ सेकृवर्जम्।। १।।**

स्वरा अवर्णादयो दन्त्या लृवर्णतवर्गलसास्ते परा यस्मात्तादृशो य: सकार: स आदौ येषां ते स्वरदन्त्यपरसकारादय: स्वरपरसादय: दन्त्यपरसादयश्च धातव: षोपदेशा ज्ञेया: उत्तरदलदर्शितान् विहाय। यथा ९९० षहि (सह) मर्षणे। ५ ष्ठां (स्था) गतिनिवृत्तौ। उक्तलक्षणेनाग्रहादाह-स्मीत्यादिस्मिप्रभृतयश्च षोपदेशा विज्ञेया:। ५६७ ष्मिङ् (स्मि) ईषद्धसने। ९४६ ञिष्विदाङ् (स्विद्) मोचने च। ११७८ ष्विदांच् (स्विद्) गात्रप्रक्षरणे। ७२९ ष्वदि (स्वद्) आस्वादने। १७४२ ष्वदण् (स्वद्) आस्वादने। ष्वञ्जिंत् (स्वञ्ज्) सङ्गे। १०८८ ञिष्वपंक् (स्वप्) शये। सृपिप्रभृतीन् विहाय। ते चेमे। ३४१ सृप्लृं (सप्) गतौ। १२५५ सृजिंच् (सृज्) विसर्गे। १३४९ सृजंत् (सृज्) विसर्गे। ४० स्त्यै (स्त्यै) संघाते। १५२१ स्तृगृश् (स्तृ)आच्छादने। १२९२ स्तृंग्ट् (स्तृ) आच्छादने। २५ सृं (सृ) गतौ। ६३५ सेकृङ् (सेक्) गतौ। षोपदेशफलं तु असीषहत् इत्यादौ षत्वकरणम्। स्मिप्रभृतिभि: साहचर्यादेकस्वराणामेव षोपदेशस्मृति:। अत एव सूत्रसत्रसंग्रामसामसमाजस्थूलस्तनस्तेन स्तोमसुखानामषोपदेशत्वात् सोसुत्र्यते सिसत्रयिषते इत्यादौ षत्वं न भवति।

**।।इति षोपदेशप्रकरणम्।।**

**।।अथ णोपदेशनिरूपणम्।।**

सर्वे न नादयो णोपदेशा नृति नन्दि नर्दि नशि नाटि नक्कि नाधृ नाथृ नृवर्जम्। येषां धातूनामादौ नकारो भवेत्ते णोपदेशा विज्ञेया: नृतिप्रभृतीन् विहाय ते चेमे। ५२ नृतैच् (नृत्) नर्तने। ३१२ टुनदु (नन्द) समृद्धौ ३०२ नर्द (नर्द) शब्दे। १२०२ नशौंच् (नश्) अदर्शने। नाटीति १५९३ नटण् (नट्) अवस्यन्दने इत्यस्यैवात्र वर्जनं नतु १८७ णट् लट् नृत्तौ। १०३३ णट (नट्) नतौ एतयो:। १५७३ नक्कण् (नक्क्) नाशने। ४४७ नाधृङ् (नाध्) नाथङ्वन्। ७१६ नाथृङ् (नाथ्) उपतापैश्वर्याशी:षु च। १०१६ नृ नये। १५३७ नृश् (नृ) नये। एतद्व्यतिरिक्ता नकारादय:सर्वे णोपदेशा: यथा ६५ णख (नख्) गतौ। णोपदेशफलन्तु प्रणखतीत्यादौ णत्वम्। ननु ६४ नख (नख्) गतौ। इत्यस्य अणोपदेशत्वात् कथमत्र न वर्जनमिति चेदुच्यते नख णख इति पाठसामर्थ्यादेव अणोपदेशत्वमेवान्यत्रापि।

**।।इति णोपदेशप्रकरणम्।।**

**।।अथ धात्वर्थविशेषनिरूपणम्।।**

**उपसर्गेण धात्वर्थो बलादन्यत्र नीयते।**

**विहाराहारसंहारप्रहारप्रतिहारवत्।। १।।**

**धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्त्तते।**

**तमेव विशिनष्ट्यन्योऽनर्थकोऽन्य: प्रयुज्यते।।२।।**

उपसर्गेण।।

**प्रपरापसमन्ववनिर्दुरभिव्यधिसूदतिनिप्रतिपर्ययय:।**

**उप आङिति विंशतिरेष सखे! उपसर्गगण: कथित: कविभि:।।१।।**

इत्याद्यन्यतमेन धात्वर्थो धातुपाठे य उक्तोऽर्थ: स बलात्प्रतीतिसामर्थ्यादन्यत्रान्यस्मिन्नर्थे नीयते स्थाप्यते पर्यवसितो भवतीत्यर्थ:। अत्र ये उपसर्गस्य द्योतकत्वमामनन्ति तन्मते तु अन्योऽप्यर्थस्तस्य धातोरेव ये तु वाचकत्वमाश्रयन्ति तन्मते धातुसम्बन्धात्तमन्यमर्थमुपसर्ग एवाभिधत्ते तदेवाह-८८५ हृंग् (हृ) वरणे। अस्य उदाहरणार्थत्वेऽपि विहार: क्रीडासमीचीनगमनं वा। आहारो भोजनम्। संहारो विनाश:। प्रहारस्ताडनतम्। प्रतिहार: द्वा:स्थकर्म् इत्यादौ उक्तादित्तिविविधार्थावगते:। कश्चिदुपसर्गो धात्वर्थं बाधते। यथा-३२० षिध् (सिध्) गत्याम्। प्रतिषेधति। अत्र गत्यर्थं बाधित्वा निषेधार्थमभिदधति। कश्चित्तं मौलधात्वर्थमनुवर्त्तते, यथा अधीयते। अत्र ११०४ इङ्क् (इ) अध्ययने। अयमधिनाऽवश्यंभावी योगो न चार्थविशेष:। अन्य उपसर्गस्तमेव मूलधात्वर्थं विशिनष्टि विशिष्टतामापादयति। यथा ९९२ डुपचींष् (पच्) पाके। प्रपचति प्रकृष्टं प्रकर्षे वा पचतीत्यर्थ:। अन्य उपसर्गोऽनर्थक एव प्रयुज्यते। ३९६ गम्लृं (गम्) गतौ। अधिगच्छति। अत्र न धात्वर्थबाधो न वा धात्वर्थविशेषता न वा गम्-धातुनाऽवश्यंभावी योग इति।

**।।इति धात्वर्थविशेषनिरूपणम्।।**

## ॥अथ अनुस्वारनिरूपणम्॥

**नकारजावनस्वारपञ्चमौ धुटि धातुषु।**
**सकारजः शकारश्चेर्षादृवर्गस्तवर्गजः॥१॥**

धातुषु धुटि धुडादौ वर्णे परे सति योऽनुस्वारो वर्गपञ्चमाक्षरो वा दृश्यते स नकारस्थाने जात इति वेदितव्यम्। ४९६ दंशं (दन्श्-दंश्) दशने दशति। अत्र यदि नकारजोऽनुस्वारो न भवत्तर्हि दंशसञ्ज इति लुग्न स्यात् १३७८ तुम्फत (तुन्फ्-तुम्प्) तृप्तौ। तृफति। अत्रापि नकारजो मकाररूपपञ्चमो वर्णो न स्यात्तर्हि नो व्यञ्जनस्येति लुग्न स्यात्। एवं च चकारे परे यः शकारः स सकारजः सकारस्थाने जातः। यथा। ६ षस्च (सस्च्-सश्च्) गतौ। सश्चति। अत्र शकारः सकारस्थाने जातः। र्षात् रकारात् षकाराच्च परो यः टवर्गः स तवर्गो जातः। यथा ११२३ ऊर्णुगक् (ऊर्नु-ऊर्णु) आच्छादने। ऊर्णुनाव। अत्र रकारात्परो यो णकारः स नकारस्थाने जातः। अन्यथा ऊर्णुनाव। अत्र रकारात्परो यो णकारः स नकारस्थाने जातः। अन्यथा ऊर्णुणाव इत्येव स्यात्। ५ ष्ठां (स्था) गतिनिवृत्तौ। अत्र षकारस्तु षोपदेशार्थस्तदन्तरं ठकाररूपटवर्णस्थकार- रूपतवर्गाजातः। एवं र्षाद् इत्यत्र पूर्वार्थे पञ्चमीविवक्षायां २५७ अद्ड (अद्ड्-अड्ड) अभियोगे अड्डति इत्यादिकमपि भावनीयम्।

### ॥इत्यनुस्वारादिनिरूपणम्॥

## ॥अथ धातुत्वनिरूपणम्॥

क्रियार्थो धातुः। क्रिया कृतिः प्रवृत्तिर्व्यापार इति यावत्। पूर्वापरीभूता साध्यमाना रूपा सार्थोऽभिधेयं यस्य स शब्दो धातुसंज्ञो भवति। पूर्वावयवयोगात्पूर्वाऽपरावयवयोगादपरा पूर्वा चासावपरा च पूर्वापरा अपूर्वापरा पूर्वापराभूता पूर्वापरीभूता तत्र पूर्वोऽवयवोऽधिश्रयणादिरपर उदकसेकादिस्तौ तौ द्वावपि भागौ पाकक्रियायां स्तः। साह्यधिश्रयणोदकसेचनादिरूपा साध्यमानाः साधनायत्तस्वरूपा क्रियास्ति यथा पचति कश्चैत्रः कमोदनं कैः काष्ठैः क्व स्थाल्यां कुतः कुशूलात् कस्मै मैत्रायेति भावना। ननु पचतीत्यादिष्वस्तु क्रियात्वं भवत्यादिषु तु सत्ताया नित्यत्वेन साध्यमानत्वाभावात् तदभावे च पूर्वापरविभागाभावात् तदभावे च क्रियार्थत्वाभावे न प्राप्नोति धातुसंज्ञा। सत्यम्। आधेयभेदेन सत्तापि पूर्वापरीभूता साध्यमाना। यथा देवदत्तसत्ता क्वचिद्गमनयुक्ता क्वचिद्भोजनयुक्ता क्वचित्पठनयुक्ता। एवमनेकधा योजना कार्या। एधते। अत्ति। दीव्यति। सुनोति। तुदति। रुणद्धि। तनोति। क्रीणाति। सहति। आयादिप्रत्ययान्तानामपि क्रियार्थत्वात् धातुत्वम्। गोपायति। कामयते। ऋतीयते। जुगुप्सते। कण्डूयति। पापच्यते। चोरयति। कारयति। चिकीर्षति। पुत्रकाम्यति। पुत्रीयति। अश्वति। श्येनायते। हस्तयते। मुण्डयति। एवं जुस्तम्भूचुलुम्पादीनामपि। जवनः। स्तभ्नाति। चुलुम्पाञ्चकार। प्रेङ्खोलयति। ननु क्रियार्थे धातौ शिश्ये इत्यादिषु भावे तदर्थप्रत्ययस्यापि धातुत्वप्रसङ्गः। भावप्रत्ययो हि क्रियार्थे एवोत्पद्यते। ततश्चात्सन्ध्यक्षर-स्येत्यात्वप्रसङ्गः। आत्वं हि धातोर्विहितमनैमित्तिकञ्चेति। अतः प्रत्ययनिषेधार्थं क्रियाविशेषकं प्रथमग्रहणं कर्तव्यं व्याख्येयञ्च प्रथमं यः क्रियामाहेति। प्राथम्यञ्चात्राभिधानापेक्षं ग्राह्यं तेन किं सिद्धमन्येनानभिहितां क्रियां य आह स धातुः। अयमर्थः-अन्येभ्यः क्रियाभिधायिभ्योः यः प्रथममाहेति। शिश्ये इत्यत्र तु शीत्यनेनाभिहितां क्रियां प्रत्यय आहेति न तस्य धातुसंज्ञा प्रवृत्तिः। शब्दार्थापेक्षया प्राथम्यं घटते तत्र शब्दतश्चेत्पुत्रीयतीत्यादावपि न प्राप्नोति। नात्र प्रथममुच्चार्यमाणः पुत्रशब्दः क्रियामाह। अर्थतश्चत्पुत्रीत्यादौ प्रथमा आद्या क्रिया अप्रथमेनापि क्येनाभिधीयते न तु द्वितीयेति सिद्ध्यति धातुसंज्ञा। ननु प्रथमग्रहणे सति चिकीर्षतीत्यत्रापि न प्राप्नोति धातुसंज्ञा। यतोऽत्रापि सन् प्रत्ययो न प्रथमं क्रियामाह अपि तु कृ इत्यनेनाभिहिताम्। नैवम्। करोत्यर्थोपसर्जनामिच्छा-मन्येनानभिहितां सन् प्रत्यय आहेति स्यादेव धातुसंज्ञेति। अत्रोच्यते। यथाऽत्र प्रथमग्रहणे कृते शिश्ये इत्यत्र धातुसंज्ञा न भवति तथा स्वार्थिकायादिप्रत्ययान्तानां न प्राप्नोति गोपायति कामयते इत्यादिषु अत्रापि अभिहिताया एव क्रियाया आयादिभिरभिहितात्वात्। तस्मादेव व्याख्येयं क्रियामेव प्राधान्येन योऽभिधत्ते स क्रियार्थाभिधायी साधुसंज्ञ् गोपयतीत्यादावपि तदस्तीति सिद्धा धातुसंज्ञा। शिश्य इत्यादौ तु भूतानद्यतनपरोक्षत्वादेरभिधानान्न धातुसंज्ञा। एतेन क्रियैवाभिधेया यस्य स धातुः। एवं च कृत्वा कर्तुमित्यादिषु साध्ये भावे कृत्प्रत्ययान्तस्यापि न धातुसंज्ञा। किञ्चान्यदपि उत्तरमस्ति अव्ययसंज्ञया धातुसंज्ञाया बाधितत्वात्। इकिस्तिव् स्वरूपार्थे इति प्रत्ययान्तस्य सिद्धसाध्ययोरभेदोपचारेण सिद्धरूपत्वात्। कर्तव्यं भूयते इत्यादौ तु भावे त्याद्यन्तस्य क्रियार्थत्वेऽपि न धातुत्वं साहचर्यात्। यतोऽन्येषामलिङ्गसङ्ख्यानामपदसंज्ञकानां

धातुसंज्ञा प्रत्ययादि। अत्र लिङ्गसङ्ख्यानां विद्यमानत्वात्। क्रियामेव प्राधान्येन योऽभिधत्ते स धातुरिति यल्लक्षणं कृतं तस्य शिष्टधातुपाठानुसारित्वाद् आणपयतीत्यानिवृत्तिः। ननु यद्येवं शिष्टधातुपाठ एवास्तु किमनेन लक्षणेनेति चेन्मैवं पाठपठितानामपि क्रियार्थानामेव धातुत्वज्ञापनार्थत्वात्। अयं भावः--लक्षणात्पृथक। पठिता अपि त एव शिष्टा धातवो ये क्रियार्थाः। तेन यावाप्रभृतीनां सर्वनामविकल्पाद्यर्थानां पाठाविसंवादित्वेऽपि लक्षणविसेवादित्वाद् आणपयतीत्यादीनां तु क्रियार्थत्वेऽपि पाठविसंवादित्वाद्धातुत्वाभावः। अन्वयव्यतिरेकाभ्याञ्च धातोः क्रियार्थत्वापगमः। तथाहि-पचतीत्यादौ धातुप्रत्ययसमुदाये संसृष्टक्रियाकालकार-काद्यनेकार्थाभिधायिनि प्रयुज्यमाने धातोरवं क्रियार्थत्वमवगम्यतेऽन्वयव्यतिरेकाभ्यां नेतरेषाम्। पचतीति प्रयोगे द्वयं श्रूयते पच् इति प्रकृतिः अति-इति प्रत्ययश्च। अर्थोऽपि कश्चिद्गम्यते। विक्लित्तिः कर्तृत्वमेकत्वम्। पठतीत्युक्ते कश्चित् शब्दो हीयते। कश्चिदुपजायते कश्चिदन्वयी। पच् शब्दो हीयते पठ् शब्द उपजायते अतिशब्दोऽन्वयी। अर्थोऽपि कश्चिद्धीयते कश्चिदुपजायते कश्चिदन्वयी विक्लित्तिर्हीयते पठिरुपजायते एकत्वञ्चान्वयी। तेन मन्यामहे यः शब्दो हीयते तस्यासावर्थो यो हीयते यश्च शब्द उपजायते तस्यासावर्थो य उपजायते यश्च शब्दोऽन्वयी तस्यासावर्थो योऽन्यवयीति। ननु कृतिः करोत्यर्थः क्रिया तत्र युक्तं पचादीनां किं करोति पचति किं करोति पठतीति करोतीत्यर्थगर्भितत्वात् क्रियात्वम् अस्ति विद्यते भवतीनां तु न युक्तम् नहि भवति किं करोति अस्ति भवति विद्यते चेति। तदयुक्तम्। न करोत्यर्थः क्रियाशब्दस्य प्रवृत्तिनिमित्तमपि तर्हि कारकव्यापार विशेषः। व्यापारश्च व्यापारान्तराद्भिद्यते इत्यस्त्याद्यर्थोऽपि क्रियैव। करोत्यर्थस्तु क्रियाशब्दस्य व्युत्पत्तिनिमित्तमेव। ननु पचतीत्यादिषु हि तदस्ति इति धातुत्वं यतः पचती युक्ते न पठति न गच्छति न किञ्चिदन्यद्व्यापारान्तरं विधत्ते किन्तु पाकरूपविशेष एव गम्यते। अपि तु अस्त्यादीनां न प्राप्नोति क्रियात्वं सत्ताया व्यापारविशेषाभावात् यतः सर्वोऽपि धात्वर्थोऽस्त्यादिभिर्व्याप्त इति चेत्सत्यम् अस्त्यैवैतत्तथापि पाकादेर्विशेषात्सत्ताया अपि विशेषो ज्ञायते स्वरूपेण। नहि स एव पाकः सैव सत्ता। यथानेकघटाच्छादक एकः पटस्तेष्वनुस्यूतोऽपि तेभ्ये भिद्यते। नहि स एव पटः स एव घटः। एवं प्रस्तुतेऽपि। एवं सति क्रियासामान्यवचनाः कृभ्वस्तयः क्रियाविशेषवचनास्तु पचादय इति सिद्धम्। यथा क्रियाशब्दस्य न करोत्यर्थः प्रवृत्तिनिमित्तं किन्तु कारकव्यापार विशेषस्तथा भावशब्दे न भवत्यर्थः प्रवृतिनिमित्तमपि तु कारकव्यापारविशेष एवेत्यर्थः। यदाह हरिः-आख्यातशब्दे भामाभ्यां साध्यसाधनवर्तिता। प्रकल्पिता यथा शास्त्रे सद्ययादिष्वपि क्रमः।।१।। साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना। सत्त्वभागस्तु यस्तस्याः स घञादिनिबन्धनः।।२।। तथा च भावे घञ् इत्युक्त्वा पाकः कार इत्यादयोऽप्युदाह्रियन्ते। क्रियोपपदाद्धातोस्तुमित्युक्त्वा योद्धुं धनुर्भवति द्रष्टुं चक्षुर्जातमित्याद्यपि उदाहरणं युक्तम्। यदाहुः-यत्रान्यक्रियात्पदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषे प्रयुज्यते। क्रिया च द्वेधा सिद्धसाध्यत्वभेदात्। तत्र सिद्धस्वभावोपसंहृतक्रमा परितः परिच्छिन्ना सत्त्वभावमापन्ना घञादिभिरभिधीयते। यदाह-कृदभिहितो भावो द्रव्यत्प्रकाशते इति। तुमादिभिस्तु सत्त्वभावमनापन्नेति विशेषः। साध्यमानावस्था पूर्वापरीभूतावयवा भूतभविष्यद्वर्तमानसद-सदाद्यनेकावयवरूपाख्यातपदैरुच्यते। यदाह-पूर्वापरीभूतं भावमाख्यातेनाचष्टे। यथा च पचतीत्यत्र पूर्वापरीभूतभावस्तद्वदेव जायते अस्ति विपरिणमते वर्धते अपक्षीयते विनश्यति भवति श्वेतते संयुज्यते समवैतीत्यादावपि। साध्यत्वाभिधानेन क्रमरूपाश्रयणात् क्रियाव्यपदेशः सिद्धः। तदुत्तम्-यवत्सिद्धमसिद्धं वा साध्यत्वेनाभिधीयते। आश्रितक्रमरूपत्वात् तत् क्रियेत्यभिधीयते।।१।। सिद्धं सत्तादि असिद्धं तु कटादि। ननु एवं तर्हि सत्तायाः साध्यमानता कया रीत्या। उच्यते। यथा एकस्मिन् स्थाने पाषाणखण्डं कस्तूरिका चास्ति ततः कस्तूरिकामाहात्म्यात्पाषाणखण्डमपि सुगन्धि भवत्येवमत्रापि कस्मिंश्चिदेकस्मिन् पिण्डे पाकक्रिया सत्ता च विद्यते, पाकक्रिया च पूर्वापरीभूता ततस्तस्या माहात्म्यात्सत्तापि पूर्वापरीभूता भवतीति साध्यमानत्वम्। किं बहुनाख्यातपदेन उच्यमानः सिद्धभावोऽपि साध्यरूपतां भजति तन्माहात्म्यादित्यलं बहुना।

**॥इति धात्वर्थनिरूपणम्॥**

## ॥इति धातुरत्नाकरस्य प्रथमो विभागः॥

# परिशिष्ट

## क्रमानुसारधात्वर्थसूची

| धात्वङ्क | धातुनाम | संस्कृतभाषार्थ | अंग्रेजी अर्थ | हिन्दी भाषार्थ |
|---|---|---|---|---|
| 1 | भू | सत्तायाम् | To be | होना |
| 2 | पां | पाने | To drink | पीना |
| 3 | घ्रां | गन्धोपादाने। | To smell | सूँघना |
| 4 | ध्मां | शब्दाग्निसंयोगयो:। | To blow | शब्द करना, अग्नि प्रज्वलित करने किए फूँकना |
| 5 | शं | गतिनिवृत्तौ। | To stand | रुक जाना |
| 6 | म्नां | अभ्यासे (अभ्यास: पारम्पर्येण वृत्ति:) | To behave like ancestors | अभ्यास करना, पूर्वजों के अनुकूल वृत्ति रखना। |
| 7 | दाम् | दाने | To give | देना |
| 8 | जिं 9 ज्रिं | अभिभवे | To conquer | जीतना |
| 10 | क्षिं | क्षये | To decay | नष्ट होना |
| 11 | इं (इत: परं षडुदन्ता:) | गतौ | To go | जाना |
| 12 | दुं 13 द्रुं 14 शुं 15 स्रुं | गतौ | To go | जाना |
| 16 | ध्रुं | स्थैर्ये च। चकाराद्गतौ | To be firm, to move | स्थिर होना, जाना |
| 17 | सुं | प्रसवैश्वर्ययो:। प्रसवोऽभ्यनुज्ञानम्। ऐश्वर्यमीशनक्रिया। | To have power to cousent | जानना, सम्मति देना, ऐश्वर्य प्रकट करना |
| 18 | स्मृं | चिन्तायाम् | To remember | स्मरण करना |
| 19 | गृ 20 घृं | सेचने | To sprinkle | छिड़कना |
| 21 | औस्वृ | शब्दो पतापयो: | To sound, to pain | शब्द करना, कष्ट देना |
| 22 | दवृं | वरणे। वरणं स्थगनम् | To cover | ढँकना |
| 23 | ध्वृं 24 ह्वृं | कौटिल्ये | To behave contrary | गलत व्यवहार करना |
| 25 | सृं | गतौ। | To go | जाना |
| 26 | ऋं | प्रापणे च। चकाराद्गतौ | To go, to carry | जाना, ले जाना |

| | | | | |
|---|---|---|---|---|
| 27 | तॄ | प्लवनतरणयो:। प्लवनं मज्जनम् तरणमुल्लङ्घनम् | To swim, to bath in water | तैरना, पानी में स्नान करना |
| 28 | दूधें | पाने | To drink | पीना |
| 29 | दैव् | शोधने | To parify | शुद्ध करना |
| 30 | ध्यैं | चिन्तायाम्। | To meditate upon | ध्यान लगाना |
| 31 | ग्लैं | हर्षक्षये। इह हर्षक्षयो धात्व पचय:। | To be weak | क्षीण होना |
| 32 | म्लैं | गात्रविनामे। विना: कान्तिक्षय: | To grow weary | म्लान होना |
| 33 | द्यै | न्यङ्गकरणे। कुत्सितमङ्गं न्यङ्गम् | To disfigure | खराब करना |
| 34 | द्रैं | स्वप्ने | To sleep | सोना |
| 35 | ध्रैं | तृप्तौ | To be satisfied | तृप्त होना |
| 36 | कैं 37 गैं 38 रैं | शब्दे | To sound | शब्द करना |
| 39 | ष्ट्यैं 40 स्त्यैं | संघाते | To be collectea in a heap | इकठ्ठा होकर समुदाय बनाना |
| 41 | खैं | खदने। खदनं हिंसा स्थैर्यश्च | To strike, to be steady | हिंसा करना, स्थिर होना |
| 42 | क्षैं 43 जैं 44 सैं | क्षये | To decrease | क्षीण होना |
| 45 | स्त्रैं 46 श्रैं | पाके | to boil | पकाना |
| 47 | पैं 48 ओवैं | शोषणे | To wither | सुकाना |
| 49 | ष्णं | वेष्टने | To coil around | लपेटना |
| 50 | फक्क | नीचेर्गतौ। नीचैर्गतिर्मन्दगमन. मसद्व्यवहार | To walk slowly<br>To behave falsely | धीरे चलना<br>गलत व्यवहार करना |
| 51 | तक | हसने | To laugh | हँसना |
| 52 | तकु | कृच्छ्रजीवने | To live in distress | दुखद अवस्था में जीना |
| 53 | शुक | गतौ | To go | जाना |
| 54 | बुक्क | भाषणे | To speak | बोलना |
| 55 | ओखृ 56 राखृ 57 लाखृ | शोषणालमर्थयो: | To be dry, to be able | सुखाना, समर्थ होना |
| 58 | द्राखृ 59 ध्राखृ | शोषणालमर्थयो: | To dry, to be able | सुखाना, समर्थ होना |
| 60 | शाखृ 61 श्लाखृ | व्याप्तौ | To pervade | व्याप्त करना |
| 62 | कक्ख | हसने | To laugh | हँसना |
| 63 | उख 64 नख 65 | गतौ | To go | जाना |

| | | | | |
|---|---|---|---|---|
| | णख 66 वख 67 मख 68 रख 69 लख 70 मखु 71 रखु 72 लखु 73 रिखु 74 इख 75 इखु 76 ईखु 77 वल्ग 78 रेगु 79 लगु 80 तगु 81 श्रगु 82 श्लगु 83 अगु 84 वगु 85 मगु 86 स्वगु 87 इगु 88 उगु 89 रिगु 90 लिगु | | | |
| 91 | त्वगु | कम्पने च। चकाराद्गतौ स्थितस्यैव चलनं कम्पनम। गतिर्देशान्तर प्राप्तिहेतुः क्रिया | To tremble, to go | कम्पित होना, जाना |
| 92 | युगु 93 जगु 94 वुगु | वर्जने | To avoid | छोड देना |
| 95 | गग्घ | हसने | To laugh | हँसना |
| 96 | दघु | पालने | To protect | रक्षा करना |
| 97 | शिघु | आघ्राणे। आघ्राणं गन्धोपादानाम्। | To smell | सूँघना |
| 98 | लघु | शोषणे | To dry | सुखाना |
| 99 | शुच | शोके | To regret | शोक जताना |
| 100 | कुच | शब्दे तारे। तार उच्च इत्यर्थः | To cry out [be have contrary] | जोर से आवाज करना, |
| 101 | क्रुञ्च | गतौ | To go, to be come small | जाना, लघुता प्रकट करना |
| 102 | क्रुञ्च च | कौटिल्याल्पीभावयोः। | To become small, to behave contrary | वक्रता करना, छोटा होना |
| 103 | लुञ्च | अपनयने। अनुपयुक्तापासने | To throw off useless | अनुपयुक्त को फेंक देना |
| 104 | अर्च | पूजायाम् | To worship | पूजा करना |
| 105 | अञ्चू | गतौ च। चकारात्पूजायाम् | To go, to worship | जाना, पूजा करना |
| 106 | वञ्चू 107 चञ्चू 108 तञ्चू 109 त्वञ्चू 110 मञ्चू | गतौ | To go | जाना |

| | | | | |
|---|---|---|---|---|
| | 111 मुञ्चू 112 म्रुञ्चू 113 म्रुचू 114 म्लुचू 115 ग्लुञ्चू 116 षस्च | | | |
| 117 | ग्रुचू 118 ग्लुचू | स्तेये | To steal | चोरी करना |
| 119 | म्लेछ | अव्यक्तायां वाचि | To speak cofusedly | अनर्थक बोलना |
| 120 | लछ 121 लाछु | लक्षणे | To mark | चिह्नित करना |
| 122 | वाछु | इच्छायाम् | To wish | इच्छा करना |
| 123 | आछु | आयामे | To extend | लंबा करना |
| 124 | ह्रीछ | लज्जायाम् | To be ashamed | शर्म करना |
| 125 | हुर्छा | कौटिल्ये | To be crooked | वक्रता करना |
| 126 | मुर्छा | मोह समुच्छ्राययो: | To faint | मूर्छित होना, बड़ा होना |
| 127 | स्फुर्छा 128 स्मुर्छा | विस्मृतौ | To forget | भूल जाना |
| 129 | युछ | प्रमादे | To be idle | आलस करना |
| 130 | धृज 131 धृजु 132 ध्वज 133 ध्वजु 134 ध्रज 135 ध्रजु 136 वज 137 व्रज 138 षम्ज | गतौ | To go | जाना |
| 139 | अज | क्षेपणे च। चकाराद्गतौ | To go, to throw | जाना, फेंकना |
| 140 | कुज् 141 खज् | स्तेये | To steal | चोरी करना |
| 142 | अर्ज 143 सर्ज | अर्जने | To procure, to earn | संग्रह करना, कमाना |
| 144 | कर्ज | व्यथने | To distress | पीडा करना |
| 145 | खर्ज | मार्जने च। चकाराद् व्यथने | To cleanse, to distress | साफ करना, पीडा देना |
| 146 | खज | मन्थे। मन्थो विलोडनम् | To churn | मंथन करना |
| 147 | खजु | गतिवैकल्ये। गतेर्वैकल्यं विकृतत्वं। | To walk lame | लंगडा होकर चलना |
| 149 | ट्वोस्फूर्जा | वज्रनिर्घोषे | To treamble | कंपित होना |
| 150 | क्षीज कूज 151 | अव्यक्ते शब्दे | To speak in distinctly | अर्थहीन आस्पष्ट बोलना |
| 152 | 152 गुज, 153 गुजु | | | |
| 154 | लज 155 लजु 156 | भर्त्सने | To blame | दोष देना |

| | | | | |
|---|---|---|---|---|
| | तर्ज | | | |
| 157 | लाज 158 लाजु | भर्जने च। चकाराद् भर्त्सने | To blame, to fry | दोष देना, छौंक लगाना |
| 158 | 159 जज 160 जजु | युद्धे | To fight | युद्ध करना |
| 161 | तुज | हिंसायाम् | To kill | हिंसा करना |
| 162 | तुजु | बलने च, चकारांद्धिंसायाम् | To kill, to breathe | हिंसा करना, श्वास लेना |
| 163 | गर्ज 164 गजु 165 गृज 166 गृजु 167 मुज 168 मुजु 169 मृजु 170 मज | शब्दे | To sound | शब्द करना |
| 171 | गज | मदनेव। चकाराच्छब्दे। | To sound, to be intoxicated | शब्द करना, मदोन्मत्त होना |
| 172 | त्यजं | हानौ। हानिस्त्यागम: | To abandon | त्याग करना |
| 173 | षञ्जं | सङ्गे | To accompany | मित्रता करना |
| 174 | कटे | वर्षावरणयो:। वृष्टावावरणे चार्थे | To cover, to rain | ढँकना, बरसना |
| 175 | शट | रुजाविशरणगत्यवशा तनेषु। चतुर्ष्वर्थेषु। | To be sick, to disunite | रोगी होना, सड जाना, पतला होना, |
| 176 | वट | वेष्टने | To surround | लपेटना |
| 177 | किट 178 खिट | उत्त्रासे। उत्त्रासो भयोद्गतिरुत्साहनञ्च | To fear, to give pain | भय करना, दु:ख देना |
| 179 | शिट 180 षिट | अनादरे | To despise | अवहेलना करना |
| 181 | जट 182 झट | संघाते। | To combine | मिलाना |
| 183 | पिट | शब्दे च। चकारात्संघाते। | To sound, to combine | शब्द करना, मिलाना |
| 184 | भट | भृतौ। भृतिर्वेतनं भरणञ्च। | To feed, to serve | पोषण करना, सेवा करना |
| 185 | तट | उच्छाये। | To rise | आगे बढना |
| 186 | खट | काङ्क्षे। काङ्क्षास्यास्तीत्य भ्रादित्वाद: काङ्क्ष:। काङ्क्षाविशिष्टो धात्वर्थ:। | To wish | इच्छा करना |
| 187 | णट | नृतौ | To dance | नृत्य करना |
| 188 | हट | दीप्तौ। | To shine | चमकना |
| 189 | षट | अवयवे | To form a part | भाग करना |
| 190 | लुट | विलोटने | To wallow | लोटना |

| | | | | |
|---|---|---|---|---|
| 191 | चिट | प्रैष्ये। प्रैष्यं दासत्वम्। | To be slave | सेवक होना |
| 192 | विट | शब्दे | To sound | शब्द करना |
| 193 | हेट | विबाधायाम् | To injure | चोट पहुँचाना |
| 194 | अट 195 पट 196 इट 197 किट 198 कट 199 कटु 200 कट | गतौ | To go | जाना |
| 201 | कुटु | वैकल्ये | To have a defect | विकलांग होना |
| 202 | मुट | प्रमर्दने | To turn forcibly | मरोड़ना |
| 203 | चुट 204 चुटु | अल्पीभावे | To become small | छोटा होना |
| 205 | वटु | विभाजने। विभाजनं विभागीकरणम् | To part | विभाजित करना |
| 206 | रुटु 207 लुटु | स्तेये | To steal | चोरी करना |
| 208 | स्फट 209 स्फुट् | विसरणे | To break | तोड़ना |
| 210 | लट | बाल्ये। बाल्यं बालक्रिया | To be childish, | बालचेष्टा करना |
| 211 | रट (अथ ठान्ता:सप्तदश सेटश्च) | परिभाषणे। | To speak | बोलना |
| 212 | 212 रठ च | चकारोलटानुकर्षणार्यस्तेन लटे रर्थद्वयं सिद्धम् | To speak | बोलना |
| 213 | पठ | व्यक्तायां वाचि | To read | स्पष्ट उच्चारण करना |
| 214 | वठ | स्थौल्ये | To be fat | मोटा होना |
| 215 | मठ | मदनिवासयोश्च | To be fat, to dwell, to be proud of | मोटा होना, निवास करना, गर्वित होना |
| 216 | कठ | कृच्छ्रजीवने | To live in distress | कष्टमय जीवन बिताना |
| 217 | हठ | बलात्कारे | To be ravish | हठ करना |
| 218 | उठ 219 रुठ 220 लुठ | उपधाते | To strike | कष्ट देना |
| 221 | पिठ | हिंसासंक्लेशनयो: | To kill, to quarrel | मारना, लड़ाई करना |
| 222 | शठ | कैतवे च। चकाराद् हिंसासंक्लेशनयो: | To deceive, to kill | मूर्ख बनाना, मारना |
| 223 | शुठ | प्रतीघाते | To strike | कष्ट देना |
| 224 | कुठु 225 लुठु | आलस्ये च। चकाराद् गतिप्रतीघाते। | To be idle, to strike | आलस करना, मारना |
| 226 | शुठु | शोषणे | To dry | सुखाना |

| | | | | |
|---|---|---|---|---|
| 227 | अठ 228 रुठु | गतौ | To go | जाना |
| 229 | पुडु | प्रमर्दने | To rub | रगड़ना |
| 230 | मुडु | खण्डने च। चकारात्प्रमर्दने | To cut a form, to rub | खण्डित करना, रगड़ना |
| 231 | मडु | भूषायाम् | To decorate | शोभित करना |
| 232 | गडु | वदनैकदेशे। गण्डगतसंहत नक्रियायामित्यर्थ:। | To decorate | शोभित करना |
| 233 | शौडृ | गर्वे | To be proud | गर्व करना |
| 234 | यौडृ | सम्बन्धे। सम्बन्ध: श्लेष: | To join | जोड़ना |
| 235 | मेड 236 म्रेडृ 237 म्लेड 238 लोड 239 लौड | उन्मादे | To be mad | पागल होना |
| 240 | 240 रोड 241 रौड 242 तौडृ | अनादरे | To dishonour | अनादर करना |
| 243 | क्रीड | विहारे | To play | खेलना |
| 244 | तुड 245 तूड 246 तोड | तोडने। तोडनं दारणम् | To break | तोड़ना |
| 247 | हुड 248 हूड | गतौ | To go | जाना |
| 249 | हुडृ २५० हौड | | To go | जाना |
| 251 | खोडृ | प्रतीघाते गतावित्यनुवृत्ते-गतिविषये प्रतीघाते | To be lame | लंगड़ा होना |
| 252 | विड | आक्रोशे। | To be cry out loudly | जोर से चिल्लाना |
| 253 | अड | उद्यमे | To exert | उद्यम करना |
| 254 | लड | विलासे | To play | खेलना |
| 255 | कडु | मदे | To be proud | गर्व करना |
| 256 | कद्ड | कार्कश्ये | To be hard | कठोर होना |
| 257 | अद्ड | अभियोगे | To attack | आक्रमण करना |
| 258 | चुद्ड (चुड्ड्) | हावकरणे। हावीभाव सूचनम्।। | To show one's wish | हावभाव दिखाना |
| 259 | अण 260 रण 261 वण 262 व्रण 263 बण 264 भण 265 भ्रण 266 म्रण 267 धण 268 ध्वण 269 ध्रण 270 कण 271 क्वण 272 चण। | शब्दे। शब्द: शब्दक्रिया | To sound | शब्द करना |

| | | | | |
|---|---|---|---|---|
| 273 | ओणृ | अपनयने | To remove | हटाना |
| 274 | शोणृ | वर्णगत्योः | To be redish, to go | लाल होना, जाना |
| 275 | श्रोणृ 276 श्लोणृ | संघाते | To unite | एक होना |
| 277 | पैणृ | गतिप्रेरणश्लेषणेषु– | To go, to embrace, to suggest to act | जाना, गले लगाना, प्रेरित करना |
| 278 | चितै | संज्ञाने। संज्ञानं संवित्तिः | To know | जानना |
| 279 | अत | सातत्यगमने। सातत्योगमनं नित्यगतिः | To go constantly | निरन्तर चलना |
| 280 | च्युतृ | आसेचने। आसेचनमीषत्सेकः | To sprinkle in small quantity | थोड़ा छिड़कना |
| 281 | चुतृ 282 स्चुतृ 283 स्च्युतृ। | क्षरणे। क्षरणं स्रवणम्। | To ooje | रिसना |
| 284 | जुतृ | भासनं | To shine | चमकाना |
| 285 | अतु | बन्धने | To bind | बांधना |
| 286 | कित | निवासे | To dwell | रहना |
| 287 | ऋत | धृणागतिस्पर्धेषु | To be kind, to go, to compete | दया करना, जाना, प्रतिस्पर्धा करना |
| 288 | कुथु 289 पुथु 290 लथु 291 मथु 292 मन्थ् 293 मान्थ | हिंसासंक्लेशयोः। हिंसा प्राण्युपधातः। संक्लेशो बाधा। | To hurt, to kill | चोट पहुँचाना, मारना |
| 294 | खादृ | भक्षणे | To eat | खाना |
| 295 | बद | स्थैर्ये | To be firm | स्थिर होना |
| 296 | खद | हिंसायाञ्च। चकारात्स्थैर्ये | To kill, to be firm | मारना, स्थिर होना |
| 297 | गद | व्यक्तायां वाचि | To speak distinctly | स्पष्ट बोलना |
| 298 | रद | विलेखने। विलेखनमुत्पाटनम | To carve | खोदना |
| 299 | णद 300 भिक्ष्विदा | अव्यक्ते शब्दे | To speak indistinctly | अस्पष्ट बोलना |
| 301 | अर्द | गतियाचनयोः | To go, to beg | जाना, मांगना |
| 302 | णर्द 303 नर्द 304 गर्द | शब्दे | To sound | शब्द करना |
| 305 | तर्द | हिंसायाम् | To kill | हिंसा करना |
| 306 | कर्द | कुत्सिते शब्दे | To rumble | अव्यक्त शब्द करना |
| 307 | खर्द | दशने। दशनमिहदन्द–शूककर्तृकं दन्तकर्म। | To bite | डंक मारना |
| 308 | अदु | बन्धने | To bind | बांधना |
| 309 | इदु | परमैश्वर्ये। परमैश्वर्यं परमेशनक्रिया | To be lord | स्वामी होना |

| | | | | |
|---|---|---|---|---|
| 310 | विदु | अवयवे। अवयव एकदशः अनेनस्वगता क्रिया लक्ष्यते। | To act in one part | एक भाग में क्रिया करना |
| 311 | णिदु | कुत्सायाम्। | To censure | निन्दा करना |
| 312 | टुनडु | समृद्धौ | To be prosperous | समृद्ध होना |
| 313 | चदु | दीप्त्याह्लादनयोः। आह्लादनमानन्दोत्पादनम् | To shine, to make delightful | चमकना, हर्षित होना |
| 314 | त्रदु | चेष्टयाम्। | To act | चेष्टा करना |
| 315 | कदु 316 क्रदु 317 क्लदु | रोदनाह्वानयोः। | To cry, to call | चिल्लाना, बुलाना |
| 318 | क्लिदु | परिदेवने। परिदेवनं शोचनम् | To lament | रोदन करना |
| 318 | स्कृन्दृ | गतिशोषणयोः। | To go, to dry | जाना, सुखाना |
| 320 | षिधू | गत्याम् | To go | जाना |
| 321 | षिधौ | शास्त्रमाङ्गल्ययोः। शास्त्रं शास्त्रविषयं शासनम्। माङ्गल्यं मङ्गलविषयाक्रिया | To advise in scriptures | शास्त्रयुक्त सलाह देना |
| 322 | शुन्ध | शुद्धौ | To be pure | शुद्ध करना |
| 323 | स्तन 324 धन 325 ध्वन 336 चन 327 स्वन 328 वन | शब्दे | To sound | शब्द करना |
| 329 | वन 330 षन | भक्तौ। भक्तिर्भजनम्। | To pray to god, to go | प्रार्थना करना, जाना |
| 331 | कनै | दीप्तिकान्तिगतिषु। दीप्तिः प्रकाशः। कान्तिः शोभा। | To shine, to be beautiful | चमकना, सुन्दर दिखना |
| 332 | गुपौ | रक्षणे | To protect | रक्षा करना |
| 333 | तपं 334 धूप | संतापे | To be hot or suffer pain | सन्तप्त होना |
| 335 | रप 336 लप 337 जल्प | व्यक्ते वचने | To speak distinctly | स्पष्ट बोलना |
| 338 | जप | मानसे च। मनोनिर्वर्त्ये वचने। वचने। चकाराद्व्यक्ते वचने | To mutter, to speak | जप करना, बोलना |
| 339 | चप | सान्त्वने | To consoleted | सान्त्वना देना |
| 340 | षप | समवाये | To unite | एक होना |
| 341 | सृप्लृं | गतौ | To go | जाना |
| 342 | चुप | मन्दायाम्। गता-वित्यनुवृत्तेर्मन्दायां गतौ | To go slowly | धीरे जाना |
| 343 | तुप 344 तुम्प 347 तुफ 348 तुम्फ | हिंसायाम् | To kill | मारना |

| | | | | |
|---|---|---|---|---|
| | 349 त्रुफ 350 त्रुम्फ 345 त्रुप 346 त्रुम्पं | | | |
| 351 | वर्फ 352 रफ 353 रेफु 354 अर्ब 355 कर्ब 356 खर्ब 357 गर्ब 358 चर्ब 359 चर्ब 360 नर्ब 361 पर्ब 362 बर्ब 363 शर्ब 364 षर्ब 365 सर्ब 366 रिबु 367 रबु | गतौ | To go | जाना |
| 368 | कुबु | आच्छादने | To cover | ढँकना |
| 369 | लुबु 370 जुबु | अर्दने | To pain | कष्ट देना |
| 371 | चुबु | वक्त्रसंयोगे। | To kiss | चुम्बन करना |
| 372 | सृभू (सृभ्) 373 सृम्भू (सृम्भ्) 374 स्रिभू (स्रिभ्) 375 षिम्भू (सिम्भ्) 376 भर्भ (भर्भ्) | हिंसायाम्। | To kill | मारना |
| 377 | शुम्भ (शुम्भ्) | भाषणे च। | To speak | बोलना |
| 378 | यभ (यभ्) | मैथुने। मिथुनस्य कर्मणि भावे वा। | To do act of intercourse | संभोग क्रिया करना |
| 379 | जभ (जम्भ्) | मैथुने। मिथुनस्य कर्मणि भावे वा। | To do act of intercourse | संभोग क्रिया करना |
| 380 | चमू 381 छमू 382 जमू 383 झमू 384 जिमू | अदने | To eat | खाना |
| 385 | क्रमू | पादविक्षेपे। पादन्यास इत्यर्थ: | To walk | चलना |
| 886 | यमूं | उपरमे। उपरमो निवृत्ति: | To stop | स्थिर होना |
| 887 | स्यमू | शब्दे | To sound | शब्द करना |
| 888 | णमं | प्रह्वत्वे। प्रह्वत्वं नम्रत्वम् | To bend | मोडना |
| 889 | षम 390 ष्टम | वैक्लव्ये। वैक्लव्यं कातरत्वम् | To be vigourless | कातर होना |
| 391 | अम | शब्दभक्त्यो: भक्तिर्भजनम् | To sound, to pray | शब्द करना, प्रार्थना करना |
| 392 | अम 393 द्रम 394 | गतौ | To go | जाना |

| | | | | |
|---|---|---|---|---|
| | हम्म 395 मीमृ 396 गम्लृं | | | |
| 397 | हय 398 हर्य | क्लान्तौ च। चकाराद्गतौ। | To be weary, to go | थकान होना, जाना |
| 399 | मव्य | बन्धने। | To bind | बांधना |
| 400 | सूक्ष्य 401 ईक्ष्य 402 ईर्ष्य | ईर्ष्यार्था | To envy | ईर्षा करना |
| 403 | शुच्यै 404 चुच्यै | अभिषवे। द्रवेण द्रवाणां परिवासनमभिषवः। | To perfume a fluid by another fluid | एक द्रव्य से अन्य द्रव्य को सुगन्धित करना |
| 405 | त्सर | छद्मगतौ। छद्मप्रकार इत्यर्थः | To cheat | छलकपट करना |
| 406 | क्मर | हूर्छने। हूर्छनं कौटिल्यम् | To be crooked | टेढा होना |
| 407 | अभ्र 408 बभ्र 409 मभ्र | गतौ | To go | जाना |
| 410 | चर | भक्षणे च। चकाराद्गतौ। | To eat, to walk | खाना, चलना |
| 411 | घोरृ | गतेश्चातुर्ये | To walk skilfully | सावधान होकर चलना |
| 412 | खोरृ | प्रतीघाते। गतेरित्यनु वृत्तेर्गतिप्रतीघाते | To be lame | विकलांग होना |
| 413 | दल 414 त्रिफला | विशरणे | To be scattered | बिखेरना |
| 415 | मील 416 श्मील | निमेषणे निमेषणं संकोचः। | To concentrate | एकाग्र होना |
| 417 | स्मील 418 क्ष्मील | निमेषणे निमेषणं संकोचः। | To concentrate | एकाग्र होना |
| 419 | पील | प्रतिष्टम्भे। प्रतिष्टम्भो रोपणम् | To erect in ground | जमीन में गाड़ना |
| 420 | णील | वर्णे। वर्णोपलक्षितायां क्रियायाम्। | To be green | हरित होना |
| 421 | शील | समाधौ। समाधिरैकाग्र्यम् | To contemplate in a thing | समाधिस्थ होना |
| 422 | कील | बन्धे | To bind | बांधना |
| 423 | कूल | आवरणे | To cover | ढंकना |
| 424 | शूल | रुजायाम् | To be ill | रोगी होना |
| 425 | तूल | निष्कर्षे। निष्कर्षोऽन्त स्थस्य बहिर्निःसारणम् | To draw out | बाहर निकालना |
| 426 | पूल | संघाते | To unite | एक होना |
| 427 | मूल | प्रतिष्ठायाम् | To root | स्थापित करना |
| 428 | फल | निष्पत्तौनिष्पत्तिः सिद्धिः | To fulfil according to wish | इच्छानुसार पूर्ण करना |
| 429 | फुल्ल | विकसने | To bloom | विकसित होना |
| 430 | चुल्ल | हावकरणे। मैथुनेच्छा-प्रेरितशरीर विकारो हावकरणम्। | To sport with a wish of intercourse | संभोगेच्छा करना |

| | | | | |
|---|---|---|---|---|
| 431 | चिल्ल | शैथिल्ये च। चकाराद्भावकरणे | To become loose, to sport with a wish of intercourse | शिथिल होना, मैथुन क्रीडा करना |
| 432 | पेलृ 433 फेलृ 434 शेलृ 435 षेलृ 436 सेलृ 437 वेल्ह 438 सल 439 तिल 440 तिल्ल 441 पल्ल 442 वेल्ल | गतौ | To go | जाना |
| 443 | वेलृ 444 चेलृ 445 केलृ 446 क्वेलृ 447 खेलृ 448 स्खल | चलने | To move | चलना |
| 449 | खल | संचये च। चकाराच्चलने | To collect, to move | एकत्रित करना, चलना |
| 450 | श्वल 451 श्वल्ल | आशु गतौ | To go quickly | शीघ्र जाना |
| 452 | गल | अदने। गल: स्रवणेऽप्यनेकार्थत्वात् | To eat, to ooze | खाना, रिसना |
| 453 | चर्व | अदने | To eat, to ooxe | खाना, रिसना |
| 454 | पूर्व 455 पर्व 456 मर्व | पूरणे | To fill | भरना |
| 457 | मर्व 458 धवु 459 शव | गतौ | To go | जाना |
| 460 | कर्व 461 खर्व 462 गर्व | दर्पे | To be proud | गर्व करना |
| 463 | ष्ठिवू 464 क्षिवू | निरसने | To spit out | थूकना |
| 465 | जीव | प्राणधारणे | To live | प्राणधारण करना |
| 466 | पीव 467 मीव 468 तीव 469 नीव | स्थौल्ये | To be fat | मोटा होना |
| 470 | उर्वै 471 तुर्वै 472 थुर्वै 473 दुर्वै 474 धुर्वै 475 जुर्वै 476 अर्व 477 भर्व 478 शर्व | हिंसा करना | To kill | हिंसा करना |
| 479 | मुर्वै 480 मव | बन्धने | To bind | बंधन में डालना |
| 481 | गुर्वै | उद्यमे | To work | काम करना |

| | | | | |
|---|---|---|---|---|
| 482 | पिवु 483 मिवु 484 निवु | सेचने | To sprinkle | छिडकाव करना |
| 485 | हिवु 486 दिवु 487 जिवु | प्रीणने | To please | प्रसन्न होना |
| 488 | इवु | व्याप्तौ च। चकारात्प्रीणने | To pervade, to please | व्याप्त करना, प्रसन्न करना |
| 489 | अव | रक्षणगतिकान्तिप्रीति तृप्त्यवगमनप्रवेश- श्रवणस्वाम्यर्थ याचन-क्रियेच्छादीप्त्य- वाप्त्यालिङ्गनहिंसादहनभाव वृद्धिषु एकोनविंशतावर्थेषु। | To protect, to go, To be beautiful, to love, to be tranquiled, to know, to enter, to hear, to work for owner, to work for money, to beg, to wish, to shine, to earn, to kiss, to kill, to burn, to be, to increase | रक्षा करना, प्रसन्न करना, सुन्दर बनाना, प्रेम करना, तृप्त करना, जानना, प्रवेश करना, सुनना, मालिक के लिये कार्यकरना, पैसे के लिए कार्य करना, मांगना, इच्छा करना, चमकना, कमाना, चुम्बन करना, मारना, जलाना, होना, बढना। |
| 490 | कश | शब्दे | To sound | शब्द करना |
| 491 | मिश 492 मश | रोषे च। चकाराच्छब्दे | To be angry, to sound | क्रोध करना, शब्द करना |
| 493 | शश | प्लुतिगतौ। प्लुतिभिर्गमने उत्प्लुत्य गमन इत्यर्थः | To walk while jumping | कूदते हुए चलना |
| 494 | णिश | समाधौ। | To comtemplate in a thing | समाधिस्थ होना |
| 495 | दृशृं | प्रेक्षणे। | To see | देखना |
| 496 | दंशं | दशने। दशनं दन्तकर्म | To bite | डंक मारना |
| 497 | घुष्ट | शब्दे | To sound | शब्द करना |
| 498 | चूष | पाने | To suck up | पान करना |
| 499 | तूष | तुष्टौ | To be tranquilled | तृप्त करना |
| 500 | पूष | वृद्धौ | To be fat | मोटा होना |
| 501 | लुष 502 मूष | स्तेये | To steal | चोरी करना |
| 503 | षूष | प्रसवे (प्रसवोऽभ्यनुज्ञानम्) | To give birth to | जन्म देना |
| 504 | ऊष | रुजायाम्। | To be kill | हिंसा करना |

